## ॥ अथ टीकावार्त्तिकसंवलितं श्रीस्थानाख्यं तृतीयाङ्गं प्रारभ्यते ॥

श्रीयुत रायधनपतिसिंह बहादुर की तरफसे छापागया

बनारस जैनप्रभाकर प्रेस

नानकचंदजती

## ॥ विज्ञापनम् ॥

---

श्रीमद्दूगडगोत्रजःपृथुयशाःश्रीवीरदासाभिध स्तत्पुत्रोबुधसिंहजर्जितयशास्सूनुस्तदीयोगुणैः ॥ ख्यातःश्रीलप्रतापसिंहविजयीभार्यातुरीयासती तस्य
श्रीमहताबनामविदिताकुक्षेस्तदीयादभूत् ॥ १ ॥ उद्यत्कीर्त्तिरुदारधर्मदृढधीर्दाताकनिष्ठःसुतः श्रीमद्रायबहादुरोधनपतिःसिंहोगुणग्रामणीः ॥ श्रीजैना
गमसम्महंसमकरोल्लोकोपकृत्यैचिरं टीकावार्त्तिकसंयुतंसुलिपिभिःसंमुद्रयित्वाशुभम् ॥ २ ॥ कृत्वापचशतस्थलेषुचपुनस्तावत्यहोपुस्तका गाराख्येषुचपुस्तका
निसकलान्यस्थापयत्सादर ॥ कुर्वंस्त्वागमपाठनचपठनंसत्साधवःश्रावकाः स्थित्यैश्रीजिनशासनस्यचपुनर्विज्ञानधर्मर्द्धये ॥ ३ ॥ भागस्तस्यतृतीयकोऽयमधुनास्था
नांगसूत्राभिधो नानापुस्तकपाठभेदबहुलोलेखप्रमादादपि ॥ दुर्वाच्यःखलुवृत्तिवार्तिकयुतपाठतथाप्राकृतं श्रीमत्पूजितरामचन्द्रगणिभिर्ज्ञातचवुध्यामया । ४
संशोध्यातिपरिश्रमेणनितरां चार्वक्षरैर्मुद्रितं स्यात्तत्रापिचकिंचिदीक्षणगतोन्मादादशुद्धयदि ॥ धांत्वाशोध्यमुदारबुद्धिविभवैर्विज्ञैःकृपाद्दृष्टितो मिथ्यादुष्कृत
मस्तुनम्रवचसासम्प्रार्थयेसज्जनान् ॥ ५ ॥ * ॥ * ॥ * ॥ * ॥ * ॥

---

# ॥ विज्ञापनम् ॥



सकल समान धर्मी श्रावक महाशयों से विनय पूर्वक निवेदन करता हूं कि दशविध दृष्टांत दुर्लभ मनुष्य शरीर पाके ज्ञान वृद्धि के हेतु यत्न करना बहुत आवश्यक है, क्योंकि जिससे जुआरी मद्यप चोर और व्यभिचारी इत्यादि दुष्कीर्त्ति और परभव में अंध पंगु कुष्टी काक कृमि और कीट इत्यादि नरक पीडा देनेवाले अकर्तव्य कर्म, धर्मी दयालु दाता सत्यवक्ता सुशील और सज्जन इत्यादि सुकीर्ति और परभव में धनसपत्ति सुख सुन्दर शरीरआरोग्य पुत्र कलत्र सुख इत्यादि स्वर्गसुख मोक्षसुख देने वाले कर्त्तव्य कर्म जाने जाते हैं।

ज्ञानी से ज्ञान मिलता है। यद्यपि ज्ञान और ज्ञानी दोनो अनादि अनंत है तथापि एक पुरुष की अपेक्षा से

परस्पर कार्य कारण सम्बन्ध सिद्ध हैं। क्योंकि ज्ञान विना ज्ञानी और ज्ञानी विना ज्ञान होना असंभव है। ज्ञान होनेमे श्रुत व्याकरण काव्य कोश ज्योतिष न्याय और अन्य अन्य दर्शन इनका शुद्ध अध्ययन अध्यापन श्रवण और मनन इत्यादि सामग्री अपेक्षित होती है। ऐसी आख्यायिका प्रसिद्ध है कि प्राचीन समय में मनुष्यों की धारणशक्ति ऐसी विलक्षण थी कि जिससे शृंखलाबद्ध अनेक ग्रंथ उनको कंठाग्र रहते थे। अन्य मतमें उनके वंशीय लोग अब भी प्रसिद्ध हैं जैसे चौबे दुबे त्रिपाठी यजुर्वेदी सामवेदी और अपने मतमें पाठक, वाचक, वाचनाचार्य औ उपाध्याय कहलाते हैं। प्रसिद्ध है कि उस समय अठारह प्रकार की लिपि प्रचलित थीं परन्तु ग्रथकंठस्थ रहने के कारण पुस्तक लिखने का परिश्रम व्यर्थ समुझते थे। और भी जो प्रथम गणधर श्री गौतम स्वामी तीर्थंकर महाराज के मुख से (उप्पन्ने इवा विगमे इवा धुवे इवा) त्रिपदी सुन के १२ अंग की रचना कर देते थे और स्मरण रखते थे इसमें केवल श्रुतज्ञान बलके सिवाय और कोई कारण नही समझा जासकता। अधुनातन मनुष्यों को जो अहर्निश अभ्यस्त भी ग्रथ और उनका तात्पर्य नही याद रहता है ज्ञानावरणीय के सेवाय कौन कारण कहेंगे। ज्ञानावरणीयकर्म का उदय भी कुछ एकही समय नही हुवा किन्तु क्रमसें जौं जौं देश क्षेत्र काल और भाव विपरीत आते गये तौं तौं ज्ञानकी

भी न्यूनता होती चली, होते होते श्री भगवान महावीर स्वामी के निर्वाण से ९८० वर्ष (ईसवी सन् ४५४। विक्रम स ५१०) वीत जाने पर देवर्द्धि गणिक्षमाश्रमणने सोंचा कि पुस्तक विनलिखे यह स्मरणशक्ति जाती रहेगी इसलिये वल्लभी पुरमें साधु समुदायके कंठस्थ जो सूत्रादि ग्रन्थ थे पुस्तकों में लिखे, परन्तु उस समय कागद और स्याही वनानेकी रीति न होने के कारण ताडपत्रके ऊपर लोह लेखनी से खुदवाके पुस्तकालय स्थापन किए, (यह वात कुछ मेरेही लिखने पर नही हर कोई स्वमती परमती जानते हैं और इतिहास प्रसिद्ध है, अबतक भी ताडपत्र के ऊपर लिखे ग्रन्थ देखने में आते हैं) पीछे जब कागद स्याही वनानेकी कला प्रसिद्ध हुई तब ताडपत्र से कागद पर लिखाके पुस्तकालय किए ताडपत्र के ऊपर लिखने से कागद के ऊपर लिखने में कम मेहनत है शीघ्रही लोगोंने अंगीकार कर लिया, कागद पर लिखने में एक ग्रंथ चिरकाल में लिखके तयार होगा जब कि वहुत ग्रंथ लिखाना होय तो वहुत से लेखक चाहियें द्रव्य व्यय भी अधिक होगा तिसमें भी यदि कोई तरह का विघ्न आय पडै कार्य पूर्ण नहो, क्योंकि एकतो श्रेयांसि वहुविघ्नानि, दूसरे मनुष्यायु अल्प, जब तक कार्य समाप्त नहो चिंता लगी रहती है और पुण्योपार्जनभी तत्कर्म समाप्ति में है, ग्रंथ संग्रह किये विना अध्ययन अध्यापन श्रवण मननादि जिनसे ज्ञान वृद्धि होती है सर्वथा

नष्ट हो जांयगे पहलेही द्वादश १२ वर्षके तीन दुर्भिक्ष होने से कितने ही ग्रंथ लुप्त होगये, और पीछे से मुसलमानोने नष्ट किये, जो वचे हैं लिखने लिखाने की अशक्तता से वर्त्तमान काल में पैंतालीस आगम एक जगह नहीं मिलता है, और अभ्यास करना तो एक कहानी सा होगया (वाहरे काल महिमा) इस हेतु वर्त्तमान कालाश्रित जितने ज्ञान वृद्धि के उपाय हैं देखा तो सर्वोत्कृष्ट मुद्रायन्त्र है इस कला से मेरा मनोरथ (जो के ५०० ठिकाने ४५ आगमकों भंडार करनेका इच्छा है) शीघ्रही सिद्ध होगा लिखने लिखाने के परिश्रम से वचेंगे प्रायः लिखी पुस्तकों से छपी हुई पुस्तकें शुद्ध होगी यदि कोई गुणी अधिकारी होगा तो, यह कला हमको कृतार्थ करने को ही प्रचलित हुई है, कोई उपाय ज्ञानवृद्धि के लिए सहज और सुदर पृथ्वीपर इसके सेवाय नही है ग्रंथ छपवाना सुरूकिया। यह कला युरूप देशीय अन्य धर्मियों से प्राप्त हुई है, अग्राह्य है, ग्रंथ छपवाने में आशातना होती है, इत्यादि असूया करना अनुचित है, क्योंकि वस्तु का उत्पत्तिस्थान और उत्पादक चाहे कोई हो सर्वोपकारिता, अल्पकालक्षेप, ज्ञानवृद्धि, पुस्तक शुभतादिक, महाकार्य के लिये अवश्य ग्रहण करनी चाहिये इसके ग्रहण करने में तथा पुस्तक छपवाने में वडा उपकार पुण्यबंधन है दोष कुछ भी नही है, पक्षपात छोडके ग्रहण करें। यदि वस्तुके उत्पत्तिस्थान की ओर देखियेगा जातक तथा पारसी जो यावनी विद्या है आप

क्यों पढते हैं? जो चीज उन लोगोंकी पैदा की है बहुतसी आपके परिभोग में आती है, कस्तूरी गोलोचनादि कहां पैदा होता है और किस कामर्में आप खरच करते है? केवल वस्तु में जो गुण हैं ग्रहण करना और दोषकों छोडदेना उचित है। इसलिए पुस्तक सुलभता, ज्ञानवृद्धि की अति उत्कृष्ट अत्यंत सहज सुगम रीति को अस्वीकार करके ज्ञानहानि नही करना चाहिये, और मध्यस्थ बुद्धिसे विचारिये तो पूर्वाचार्योंने बडे परिश्रम से परोपकारार्थ जो ग्रथ बनाये हैं किसीके देखने में न आवें असा गुप्त रखना कि कुछ दिन में कीडे खाजांय और ग्रंथ का नाममात्रही शेष रह जाय उनका परिश्रम व्यर्थ होजावे इसके सेवाय कोई अविनय और आशातना 'कर्मबंधका हेतु, नही है, वही ग्रंथ छपवाके प्रसिद्ध करना हरएक विद्वानोंको देना तद्द्वारा वह लोक ज्ञान पावें इससे अधिक कोई विनय और श्रेष्ठकार्य नही है, यही सर्व कारण सोंच मैं इस शुभ कार्यमें प्रवृत्त हुवा हूं आप लोगभी यथाशक्ति प्रवृत्त होंय कि जिससे पुन जैनमत युवावस्था कों प्राप्त होय इति शम्।

मकसूदाबाद

अजीमगंज

द० राय धनपतसिह बहादुर

# भूमिका।

यह ठाणांग तीसरा अंग परमकरुणावत श्रमण भगवंत श्रीमहावीरस्वामीके उपदेशसे धर्मरत्नरक्षक भगवंत गणधर श्रीगौतम स्वामी तथा श्री सुधर्मा स्वामीने चतुर्विध श्रमणसंघ भट्टारक और उनकी संतति के परम उपकारार्थ सूत्ररूपसे संकलित किया, स्थान यह, नाम १ स्थापना २ द्रव्य ३ क्षेत्र ४ अद्धा ५ ऊर्द्धता ६ उपरति ७ वसति ८ सयम ९ प्रग्रह १० योध ११ अचलता १२ गणना १३ सधान १४ और भाव १५ भेदसे पंद्रह प्रकारका होता है, स्थानांग इस पदका समुदायार्थ यह है कि यथावत् स्वरूप कथन करके स्थापित किये हैं एक दो तीन इत्यादि दश सख्या पर्यंत विशेषित आत्मादि पदार्थ जिसमें अथवा स्थान शब्दसे एक दो इत्यादि सख्या का भेद इस ग्रंथमें कहा जाता है, आत्मादि पदार्थोंको एकसे लेके दश तक सख्या और यथायोग्य स्थिति कहने से वसति और गणनास्थान का अधिकार है इससे स्थान ऐसा कहा, वही स्थान क्षायोपशमिक भावरूप प्रवचन पुरुषके अंगकी तरह है इससे स्थानाग नाम हुआ, इसमे भाव स्थानका भी अधिकार है, इस स्थानांग

के दस अध्ययन हैं, पहिले अध्ययनमे एक संख्या विशेषित पदार्थ कहे हैं, दूसरे में वही दो संख्या विशेषित इत्यादि दश अध्ययन हैं, इस स्थानांगके पदार्थोंका तात्पर्य शीघ्र ज्ञात होनेके लिये उपक्रम १ निक्षेप २ अनुगम ३ और नय ४ चार अनुयोग अर्थात् सूत्रका अर्थसे संबंध, अथवा अनुकूल व्यापार अर्थात् सूत्रार्थ प्ररूपण रूप क्रिया विशेष, कहे हैं, यही चारों जैसे नगरमें सुखसे प्रवेश करनेमें चार द्वार होते हैं वैसे इस प्रवचनमें प्रवेश करने के यह चार अनुयोग रूप द्वार ( प्रवेश मुख ) हैं, इन अनुयोग द्वारों से जीवा जीवादि पदार्थ नियमित संख्या विशेषित ज्ञात होने से तत्वज्ञान रूप परम पुरुपार्थ सिद्ध होता है इसलिये इस के पढने पढाने में अवश्य यत्न करना चाहिये, परन्तु पढनेका अधिकारी वही हे जो कि मोक्ष मार्ग का अभिलाषी गुरूका आज्ञाकारी और दीक्षा लिये आठ वर्ष जिस्को व्यतीत भया होय । स्थानाग सूत्र देनेका अवसर भी वही है इति शम् ॥

मकसूदाबाद

अजीमगंज

द० राय धनपतसिंह बहादुर

## नकल चिठी १

श्रीमज्जिनवरप्रसादलब्धसद्बुद्धिप्रकाशितधर्मरत्नेषु श्री ५ रायधनपतिसिंहबहादुरेषु सविनयमावेदनम् ।

आगे, मैंने सुनाहै आप की ऐसी इच्छाहै कि पैंतालिसों जैनागम की पुस्तके मूल टीका और भाषाटीका सहित पाच२ सौ कापी छपैं और साधु श्रावकों के पठन पाठन के लिये पाचसौ स्थानमे पुस्तकालय स्थापित हो सो यह अति आनंदकी बातहै परंतु जिन महाशयों को द्रव्य देके पुस्तक लेने की इच्छा हो उन लोगो के निमित्त भी यदि आप की आज्ञा हो तो बेचने के वास्ते पाचसौ कापी जैन बुक सुसाइटी की ओर से भी छपवा ली जावे यह पुस्तकें मे अजीमगंज से प्रकाश करुगा अग्रे शुभम् ।

संवत् १८३३ मि० । चै० । शु० । ११

अजीमगंज — द० जैन बुक सुसाइटी

शहर मुरसीदाबाद — कार्यसम्पादक

सुबुद्धिसेठ

## नकल चिठी २

श्रीविविधविद्याविचारतत्परेषु जैन बुक सुसाइटीकार्यसम्पादक महाशयेषु प्रतिनिवेदनम् ।

जो कि पत्र आपका द्रव्य देके खरीदनेवाले लोगो के लिये सुसाइटी की ओर से पैंतालिसो जैनागम की पाचसौ पुस्तके छपवा लने की आज्ञा के विषय मे आया सो मै स्वीकार करता हू कि आप जैन बुक सुसाइटी की तरफ से आगम की प्रत्येक पाच २ सौ पुस्तके बेचने के वास्ते छपवा लेवे, परंतु पाचसौ से अधिक छपनेकी आज्ञा मै नही देता, यदि और कोई छपवाना चाहै तो उचित है कि पहले मुझ से आज्ञा लेलेवे क्यो कि इन ग्रन्थो पर रजस्टरी हुईहै, अग्रे शुभम् ।

स० । १८३३ । मि० । चै० । शु । १३

अजीमगंज — द० रायधनपतिसिंह

शहर मुरसीदाबाद — बहादुर

| पत्र | पृष्ठ | स्थानाक | उद्देशाक | ग्रन्थ सङ्ख्याङ्क |
|---|---|---|---|---|
| ३३ | १ | १ | ० | ११८० |
| ५६ | २ | २ | १ | |
| ६३ | २ | २ | २ | |
| ८१ | २ | २ | ३ | |
| १०८ | २ | २ | ४ | १६७५ |
| १३७ | १ | ३ | १ | |
| १४९ | १ | ३ | २ | |
| १७२ | २ | ३ | ३ | |
| १९८ | १ | ३ | ४ | २०७५ |
| २३२ | २ | ४ | १ | |
| २७० | २ | ४ | २ | |
| ३१० | २ | ४ | ३ | |
| ३४३ | २ | ४ | ४ | २८३२ |

| पत्र | पृष्ठ | स्थानाक | उद्देशाक | ग्रथसख्याङ्क |
|---|---|---|---|---|
| ३६४ | २ | ५ | १ | |
| ३८७ | २ | ५ | २ | |
| ४०७ | १ | ५ | ३ | १६२५ |
| ४३५ | २ | ६ | १ | ७६५ |
| ४७४ | २ | ७ | १ | ९५० |
| ५०६ | २ | ८ | १ | ७२० |
| ५३५ | २ | ९ | १ | ७०७ |
| ५९५ | २ | १० | १ | १७१४ |

ग्रन्थसङ्ख्या

मूल सूत्र—३७५०

सस्कृत टीका—१४२५०

भाषा टीका—७०००

सर्वसङ्ख्या २५०००

यह पुस्तक जिसको मोल लेनी हो मकसूदाबाद अजीमगज जैनबुक् सुसाइटी कार्याध्यक्ष सुबुद्धिसेठ को लिखने से मिलेगी——

और राय धनपतिसिह वहादुरकी तरफ से धर्मार्थ जहार की हुई पुस्तकोको अगर कोई वेचे या खरीद करेगा श्रीचौवीसीजी का और श्रीसघका गुनहगार होगा सरकार से कानून मुताविक सजा पावेगा।

ठिकाना राय धनपतसिह वहादुर की कोठी।

फी पुस्तक दाम ३॥)

द० सु० सुबुधिसेठ

॥ श्रीजिनेंद्रायनमः ॥ अर्हं ॥ श्रीवीरंजिननाथं नत्वास्थानांगकतिपयपदानां प्रायोन्यशास्त्रदृष्टं करोम्यहंविवरणंकिंचित् ॥ १ ॥ इहहि श्रमणस्यभगवतः श्री महावीरवर्द्धमानस्वामिन इक्ष्वाकुकुलनन्दनस्य प्रसिद्धसिद्धार्थराजसूनो र्महाराजस्येव परमपुरुषकाराक्रान्तविक्रान्तरागादिशत्रोराज्ञाकरणदक्षक्ष्मापति प्रतसततसेवितपादपद्मस्य सकलपदार्थसार्थसाक्षात्करणदक्षकेवलज्ञानदर्शनरूपप्रधानप्रणिध्यवबुद्धसर्वविषयग्रामस्वभावस्य सकलत्रिभुवनातिशायिपरमसा म्राज्यस्य निखिलनीतिप्रवर्त्तकस्य परमगम्भीरा न्महार्था दुपदेशा न्निपुणबुद्ध्यादिगुणगणमाणिक्यरोहणधरणीकल्पेन भाण्डागारनियुक्तेनेवगणधरेण पूर्वं काले चतुर्वर्णश्रीश्रमणसङ्घभट्टारकस्य तत्सन्तानस्यचो पकाराय निरूपितस्य विविधार्थरत्नसारस्य देवताधिष्ठितस्य विद्याक्रियाबलवतापि पूर्वपुरुषेण केनापि कुतोपि कारणा दनुन्मुद्रितस्या तएवच केषा ञ्चिदनर्थभीरूणा म्मनोरथगोचरातिक्रान्तस्य महानिधानस्येव स्थानाङ्गस्य तथाविधविद्यादिबलविकलै रपि केवलम्भाग्यप्रधानैः स्वपरोपकारायार्थविनियोजनाभिलाषिभि रतएव चावगणितस्वयोग्यतै र्निपुणपूर्वपुरुषप्रयोगा नुपश्रित्य किञ्चित् समत्वो त्प्रेक्ष्य तथा विधवर्त्तमानजना नाप्तृच्छ्यच तदुपायान् द्यूतादिमहाव्यसनोपेतै रिवा स्माभिरुन्मुद्रणमिवा नुयोगः प्रारभ्यत इतिशास्त्रप्रस्तावना। तस्य चानुयोगस्य फला दिद्वारनिरूपणतः प्रवृत्ति र्यतउक्तं तस्सफलजोगमगल समुदायत्थातहेवदाराइं तब्भेयनिरुत्तिक्कम पयोयणाइंचवच्चाइति ॥ १ ॥ तत्र प्रेक्षावतां प्रवृत्तये फल मवश्य म्वाच्य मन्यथा हि निष्प्रयोजनत्वमस्या शङ्कमानाः श्रोतारः कण्टकशाखामर्दनइव नप्रवर्त्तेरन्निति तच्चानन्तरपरम्परभेदात् द्विधा तत्रानन्तर मर्था वगम स्तत्पूर्वकानुष्ठानतस्त्वा पवर्गप्राप्ति र्यासा परम्परप्रयोजनमिति ॥ तथा योग. सम्बन्धः सचयद्युपायोपेयभावलक्षणो यदुतानुयोगउपायो ऽर्थावगमादि श्चोपेयमिति तदा सप्रयोजनाभिधानादेवा भिहित इत्यवसरलक्षणः सम्बन्धो स्यवाच्यः कोस्यदानेसंबन्धो ऽवसर इतिभाव योग्यो वा दाभिश्रस्यकइति तत्र भव्यस्य मोक्षमार्गाभिलाषिणः श्रितगुरूपदेशस्य प्राणिनो अष्टवर्षप्रमाणप्रव्रज्यापर्यायस्येव सूत्रतोपि स्थानाङ्ग देयमिति अयमवसरोयोग्योपिवायमेवेति य

ते यतएव मत स्तन्निरूप्यते तत्र स्थान मक्कंचेति पद्द्वयं निक्षेपणीय मिति तत्र स्थान न्नाम स्थापनादिभेदात् पंचदशधा यदाह नामठवणादविए खेत्त द्धाउड्ढउवरइवसही सजमपग्गहजोहे अचलगणणंसधणाभावेत्ति तत्र स्थानमिति नामैव नाम स्थानं यस्य वा सचेतनस्या चेतनस्य वा स्थानमिति नामक्रि यते तद्वस्तुनाम्ना स्थानन्नाम स्थानमित्युच्यते तथा स्थाप्यत इति स्थापना ऽच्चादि साच स्थानाभिप्रायेण स्थानमप्यभिधीयते ततः स्थापनैव स्थान तथा द्रव्यं सचित्ताचित्तमिश्रभेद स्थान गुणपर्यायाश्रयत्वा त्ततः कर्म्मधारयइति तथा क्षेत्रमाकाश न्तच तत्स्थान च द्रव्याणामाश्रयत्वात् क्षेत्रस्थानं तथा अडा कालः सच स्थान यतो भवस्थितिः कायस्थिति श्च भवकाल' कायकाल श्चाभिधीयते स्थिति स्थानमेवेति उड्ढत्ति उर्द्धतया स्थान मवस्थानं पुरुषस्यो र्द्धस्थानं कायो त्सर्ग इति इह स्थानशब्द. क्रियावचन एवं निषन्न त्वग्वर्त्तनादिस्थान मपि द्रष्टव्य मूर्द्धशब्दस्योपलक्षणत्वादिति तथा उपरतिर्विरतिः सैव स्थानं विविध गुणाना माश्रयत्वात् विशेषार्थी चेह स्थानशब्द स्ततो विरते स्थानविशेषो विरतिस्थान तच्च देशविरतिः सर्वविरतिश्चेति तथा वसति स्थानमुच्यते स्थीयते तस्मिन्निति कृत्वेति तथा सयमस्य स्थान सयमस्थान मिह स्थानशब्दो भेदार्थः सयमस्य शुद्धिप्रकर्षाप्रकर्षकृतो विशेषः संयमस्थान न्तथा प्रगृह्यते उपादीयते आदेयवचनत्वा द्यः स प्रगृह्यो ग्राह्यवाक्यो नायक इत्यर्थः सच लौकिको लोकोत्तरश्चेति तत्र लौकिको राजयुवराजमहत्तरामात्यकुमाररूपो लोकोत्तरश्चा चार्योपाध्यायप्रवर्त्तकस्थविरगणावच्छेदकरूप इति तस्य स्थान म्पद मग्रहस्थान मिति तथा योधाना स्थान मालीढप्रत्यालीढवैशाखमण्डलसमपादरूप श रीरन्यासविशेषात्मकं योधस्थान न्तथा अचलत्ति अचलतालक्षणोधर्म्मः सादिसपर्यवसितादिरूपः स्थान मचलतास्थानं तथागणणत्ति गणनाविषय स्थानमेका द्यादिशीर्षप्रहेलिकापर्यन्तं गणनास्थान तथा सन्धानन्द्रव्यत श्छिन्नस्य कंचुकादे रच्छिन्नस्य तु पक्ष्मोत्पद्यमानतंत्वादे रिति भावतस्तु च्छिन्नस्य प्रशस्ताप्रशस्तभाव स्य पुनः सन्धान मच्छिन्नस्य त्वपरापरोत्पद्यमानस्य प्रशस्तभावस्य सन्धान न्तदेव स्थान म्वस्तुनः सहतत्वेनावस्थान सन्धानस्थान म्भावेति भावाना मौदयिका

दीनां स्थान मवस्थिति रिति भावस्थान मिति एव मिह स्थानशब्दो ऽनेकार्थः इहच वसतिस्थानेन गणनास्थानेन चाधिकार इति दर्शयिष्यति इदानीं मङ्ग निक्षेप उच्यते तत्र गाथा नामगंठवणागं दव्वंगंचेवहोइभावंग एसोखलुअंगस्स निखेवोचउव्विहोहोइति ॥ १ ॥ तत्र नामस्थापने प्रसिद्धे द्रव्यांगं पुनर्द्रव्यस्य मद्यौषधादे रंग कारण मवयवो वेति द्रव्यांगं भावस्य क्षायोपशमिकादे रेव मेवाग भावांग मिति इहच भावांगेना धिकार इत्यपि दर्शयिष्यते तत्र तिष्ट त्यासते वसन्ति यथा वदभिधेयतयै कत्वादिविशेषिता आत्मादयः पदार्था यस्मि न्स तत्स्थानअथवा स्थानशब्देने हैकादिकः संख्याभेदो भिधीयते तत आत्मा दिपदार्थगताना मेकादिदशाताना स्थानाना मभिधायकत्वेन स्थान माचाराभिधायकत्वा दाचारवदिति स्थानच तत् प्रवचनपुरुषस्य क्षायोपशमिकभाव रूपस्यां गमिवाङ्ग वेति स्थानाङ्गमिति समुदायार्थः तच्च दशाध्ययनानि तेषु प्रथममध्ययनमेकादित्वा त्संख्यया एकसंख्योपेतात्मादिपदार्थप्रतिपादकत्वा दैकस्थान त्तस्यच महापुरुषस्येव चत्वार्यनुयोगद्वाराणि भवन्ति तद्यथो पक्रमो निक्षेपो नुगमो नयश्चेति तत्रानुयोजन मनुयोगः सूत्रस्यार्थेन सहसंबन्धनं अ थवा अनुरूपो ऽनुकूलो वा यो योगो व्यापारः सूत्रस्यार्थप्रतिपादनरूपः सोनुयोगः इत्याहच अणुजोजणमणुजोगो सुयस्सनियएणजमभिधेयेण वावारोवा जोगो जोअणुरूवोअअणुकूलोवेति ॥ १ ॥ अथवा अर्थापेक्षयाअणोर्लघोः पश्चाज्जाततया वा नुशब्दवाच्यस्य सूत्रस्य योभिधेयो योगो व्यापार स्तेन संबन्धो वा सोणुयोगो नुयोगोवेति आहच अहवाजमत्थओथो वपच्छभावेहिंसुयमणुतस्स अभिधेएवावारो जोगोतेणंचसबंधेत्ति ॥ १ ॥ तस्य द्वाराणीव द्वाराणि तत् प्रवेशमुखानि एकस्थानकाध्ययनपुरस्या र्थाधिगमोपाया इत्यर्थः नगरदृष्टान्त श्चात्र यथाह्यकृतद्वार न्नगर मनगर मेव भवति कृतैकद्वारमपि दुरधिगमं का र्यातिपत्तयेच चतुर्मूलद्वारन्तु प्रतिद्वारानुगतं सुखाधिगम कार्यानधिपत्तयेच एव मेकस्थानकाध्ययनपुर मप्यर्थाधिगमोपायद्वारशून्यमशक्याधिगम भवति एकद्वारानुगत मपि च दुर्राधगम सप्रभेदचतुर्द्वारानुगत न्तु सुखाधिगम मित्यतः फलवान् द्वारोपन्यास इति ॥ तानिच द्विचिद्विद्विभेदानि क्रमेण भवन्ती

ष छव्विहनामेभावे खओवसमिएसुयंसमोयरति जंसुयनाणावरणं खओवसमजंतयंसबंति ॥ १ ॥ तथा प्रमाणं द्रव्यादिभेदा च्चतुर्विधं तत्र चायोप शमिकभावरूपत्वा दस्य भावप्रमाणे अवतारो यतआह ॥ दव्वादीचउभेय पमीयतेजेणतपमाणति इणमज्झयणभावो त्तिभावमाणेसमोयरतित्ति ॥ १ ॥ भावप्रमाणञ्च गुणनयसंख्याभेदत स्त्रिधा तत्रास्य गुणप्रमाणसंख्याप्रमाणयो रेवावतारः नयप्रमाणे तु नसम्प्रति यदाह मूढनइयंसुयंकालियंतुननयासमोयर तिइह अपुहत्तेसमोयारो नत्थिपुहत्तेसमोयारोत्ति ॥ १ ॥ गुणप्रमाणन्तु द्विधा जीवगुणप्रमाणमजीवगुणप्रमाणञ्च तत्रास्य जीवोपयोगरूपत्वात् जीवगुणप्रमा णे वतार स्तस्मिन्नपि ज्ञानदर्शनचारित्रभेदा त्र्यात्मके अस्य ज्ञानरूपतया ज्ञानप्रमाणे तत्रापि प्रत्यक्षानुमानोपमानागमात्मके प्रकृताध्ययनस्या सोपदेशरूपत्वा दागमप्रमाणे तत्रापि लौकिकलोकोत्तरभेदे परसगुरुप्रणीतत्वेन लोकोत्तरे सूत्रार्थोभयात्मनि तथाचाह ॥ जीवाणन्नत्तणउ जीवगुणेचोइहभावओनाणे लो उत्तरसुतत्थो भयागमेतस्सभावाओ ॥ १ ॥ तत्राप्यात्मानन्तरपरम्परागमभेदत स्त्रिविधो र्थत स्तीर्थकरगणधरतदन्तेवासिनः सूत्रत स्तु गणधरतच्छिष्यतत्प्रशि ष्यानुपेक्षयथाक्रम मात्मानन्तरपरम्परागमेष्व वतारः संख्याप्रमाण मन्यत्र प्रपञ्चित न्ततएवावधारणीय न्तत्र चास्य परिमाण संख्याया मवतार स्तत्रापि कालिकश्रुतदृष्टिवादश्रुतपरिमाणभेदतो द्विभेदायां कालिकश्रुतपरिमाणसंख्याया कालिकश्रुतत्वा दस्येति तत्रापि शब्दापेक्षया संख्येयाक्षरपदाद्यात्म कतया संख्यातपरिमाणात्मिकाया मर्थापेक्षयात्वनन्तपरिमाणात्मिकाया मपर्यायत्वा दागमस्य तथाचाह ॥ अणतागमा अणतापज्जाया इत्यादि ॥ तथा वक्तव्यता स्वसमयेतरोभयवक्तव्यता भेदा त्रिधा तत्रेद स्वसमयवक्तव्यताया मेवावतरति सर्वाध्ययनाना तद्रूपत्वात् तदुक्तं परससमओउभयम्वा सम्म दिठिस्ससमओजेण तासव्वज्झयणाइं ससमयवत्तव्वनिययाइंति ॥ १ ॥ तथा अर्थाधिकारो वक्तव्यता विशेषएव सचैकत्वविशिष्टात्मादिपदार्थप्ररूपणलक्षण इति तथा समवतारःप्रतिद्वार मधिकृताध्ययनसमवतारणलक्षणः सचानुपूर्व्यादिषु लाघवार्थं सुक्तएवेति नपुन रुच्यते तथाहि ॥ अणुणायसमोयारो जेण

समोयारियंपईदारं एगठाणमणुगओ सोलाववओगपुणवओ ॥ निक्षेपस्त्रिधा ओघनामसूत्रालापकनिष्पन्नभेदात् आहच भन्नइघेप्पइयसुद्दं निक्खेवपयाणुसा

रओसत्थं ओहोनामंसुत्त निखेत्तव्वंतओवस्सं ॥ १ ॥ तत्रौघः सामान्यमध्ययनादिनाम उक्तञ्च ओहोजसामन्नं सुयाभिहाणंचउव्विहंतंच अज्झयणअज्झीणं

आउज्झवणायपत्तेय ॥ नामादिचउभेयं वन्नेऊणंसुयाणुसारेण एगठाणजोज्ज चउसुविकमेणभावेसु ॥ २ ॥ तत्राध्यात्म मन स्तत्रशुभेऽयनङ्गमनमर्यादात्मनो

भवति यस्मात् अध्यात्मशब्दवाच्यस्य वा मनसः शुभस्य आनयन मात्मनियतो भवति बोधादीना श्चाधिक मयन यतो भवति तदज्झयणति प्राकृतशैल्या भ

यतीति आहच जेणसुहप्पज्झयणंअज्झप्पाणयणमहियमयणवा बोहस्ससंजमस्सवमोक्खस्सवतोतमज्झयणति ॥ १ ॥ अधीयते वा पठ्यते आधिक्येनस्मर्यते गम्य

ते वा तदित्यध्ययनमिति ॥ तथा यद्दीयमान न्न चीयतेस्म तदचीण न्तथा ज्ञानादीना मायहेतुत्वा दायः तथा पापानां कर्म्मणां क्षपणहेतुत्वा त्क्षपणेति

आहच अजझीणंदिज्जतं अव्वोच्छित्तिनयइअलोगुव्व आओणाणाईणंज्झवणापावाणखवणंति नामनिष्पन्नेतु निक्षेपे ऽस्यैकस्थानकमितिनाम तत एकशब्दस्य

स्थानशब्दस्यच निक्षेपो वाच्य स्तत्र एकस्य नामादिः सप्तधा तदुक्त नाम १ ठवणा २ दविए ३ माउयपय ४ सगहेक्कएचेव ५ ॥ पज्जव '६ भावेय ७ तहा स

त्तेतेएक्कगाहोंति ॥ १ ॥ तत्रनामैको यस्यैक इति नामस्थापनेकः पुस्तकादिन्यस्तैककान्तः द्रव्यैकः सचित्तादि स्त्रिधा मातृकापदैक स्तु उप्पन्नेइवाविगमेइवाधुवे

इवत्ति एपां मातृकावत्सकलवाङ्मयमूलतया अवस्थितानां मन्यतर द्वियचित अकाराद्यक्षरात्मिकाया वा मातृकाया एकतरो अकारादिः संग्रहैको येनै

केनापि ध्वनिना बहवः सगृह्यन्ते यथा जातिप्राधान्येन व्रीहिरिति पर्यायैकः शिविकादिरेकः पर्यायो भावैक औदयिकादिभावाना मन्यतमो भाव इति

इह भावैकेनाधिकारो यतो गणनानामलक्षणस्थानविषयो य मेको गणनाच सख्या संख्याच गुणो गुणश्च भाव इति स्थानस्यतु निक्षेपउक्त एव तत्रच गण

नास्थाने नेहाधिकार स्तत एकलक्षणं स्थानं संख्याभेदः एकस्थान न्तद्विशिष्टजीवाद्यर्थप्रतिपादनपर मध्ययन मप्येकस्थान मिति ॥ उक्तावोघनामनिष्पन्न

निक्षेपो सम्प्रतिसूत्रालापकनिष्पन्ननिक्षेपः प्राप्तावसरः तत्स्वरूपञ्चेदं सूत्रालापकानां सूत्रपदानां श्रुत मे आयुष त्नित्यादीनां निक्षेपो नामादिन्यास' सचा वसरप्राप्तोपि नोच्यते सतिसूत्रे तस्य सम्भवात् सूत्रञ्च सूत्रानुगमे सचानुगमभेद एवेत्यनुगमएव तावदुपवर्ण्यते द्विविधो नुगमो निर्युक्त्यनुगम सूत्रानुगमश्च तत्राद्यो निक्षेपनिर्युक्त्युपोद्घातनिर्युक्तिसूत्रस्पर्शिकनिर्युक्त्यनुगमविधानत स्त्रिविधः तत्र च निक्षेपनिर्युक्त्यनुगम' स्थानाङ्गाध्ययनाद्येकशब्दाना निक्षेपप्रतिपाद ना दनुगत एवेति उपोद्घातनिर्युक्त्यनुगमस्तु उद्देसेनिद्देसेयनिग्गमे॰ इत्यादि गाथाद्वयादवसेय इति सूत्रस्पर्शिकानिर्युक्त्यनुगमस्तु संहितादौ षड्विधे व्या ख्यालक्षणे पदार्थपदविग्रहचालनाप्रत्यवस्थानलक्षणव्याख्यानभेदचतुष्टयस्वरूप' सच सूत्रानुगमे संहितापदलक्षणव्याख्यानभेदद्वयलक्षणे सति भवती त्यतः सूत्रानुगम एवोच्यते तत्र चाल्पग्रन्थमहार्थादिसूत्रलक्षणोपेत स्खलितादिदोषवर्जित सूत्र मुच्चारणीय न्तच्चेद ॥ सुयमेइत्यादि ॥ अस्यच व्याख्या संहितादि क्रमेण त्याह च भाष्यकारः सुत्त १ पय २ पयत्थो ३ संभवतोविग्गहो ४ वियारोय ५ चालनेत्यर्थः दूसियसिद्धी ६ नयमय विसेसओनेयमणुसुत्त १ ॥ तत्र सूत्रमिति संहिता साचानुगतैव सूत्रानुगमस्य तद्रूपत्वा दित्याहच होइकयत्थोवोत्तु सपयत्थेयसुयसुयाणुगमोत्ति सूत्रे चास्खलितादिगुणोपेते उच्चारिते केचिदर्था अवगताः प्राज्ञाना भवन्त्यतः संहिता १ व्याख्याभेदो भवति अनधिगतार्थाधिगमाय च पदादयो व्याख्याभेदाः प्रवर्त्तन्त इति तत्र पदानिश्रुत

## ॥र्दय॥ श्रीअर्हद्भ्यो नमः ॥ सुयमेआउसंतेण भगवयाएवमक्खायं ॥

श्रीमहावीरजिननत्वा । श्रीगुरुचसुदासदा स्थानांगाभिधसूत्रस्य । टबार्थंलिख्यतेमया ॥ १ ॥ श्रीसुधर्मा स्वामी जंबूस्वामीनें कहेछे। जे में साभल्युंछे हे आयूखावत जबू । भगवत श्रीमहावीरें कह्यो एठाणाग सूत्रनो अर्थ तेकहु तुम्हे साभलो ॥ * * * * *

मया आयुष्मन् तेन भगवता एवं व्याख्यात मिति एव मदेषु व्यवस्थापितेषु सूत्रालापकनिष्पन्ननिक्षेपावसर स्तच्चे यं व्यवस्था जत्थउजंजाणेज्जा निक्खेव निक्खिवेनिरवसेस जत्थयिणजाणेज्जा चउक्कयमिनिक्खिवेतत्थत्ति ॥ १ ॥ तत्र नामश्रुत स्थापनाश्रुतञ्च प्रतीत द्रव्यश्रुत मधीयानस्या नुपयुक्तस्य पञ्च कपुस्तकन्यस्त स्वा भावश्रुतन्तु श्रुतोपयुक्तस्येति इहच भावश्रुतेन श्रोत्रेन्द्रियोपयोगलक्षणेना विकार: तथा आउसंति आयुर्जीवित न्तन्नामादिभेदतो दशधा तद्यथा नामठवणा २ दविए ३ ओहे ४ भव ५ तब्भवेय ६ भोगेय ७। सजमे ८ जस ९ कित्ती १० जीवियचतंभन्नईदसहा ॥ १ ॥ तत्र नाम स्थापनेक्षुणे दविएत्ति द्रव्यमेव सचेतनादिभेद ञ्जीवितव्यहेतुत्वा ज्जीवितं द्रव्यजीवित ओघजीवित नारकाद्यविशेषितायु र्द्रव्यमात्र सामान्यजीवित म्भवति नारकादिभवविशिष्टं जीवित भवजीवित न्नारकजीवित मित्यादि ॥ तब्भवेयत्ति तस्यैव पूर्वभवस्य समानजातीयतया सम्बन्धिजीवित न्तद्भवजीवित यथा मनुष्यस्य सतो मानुषत्वेनो त्पन्नस्येति भोगजीवित ञ्चक्रवर्त्यादीनां सयमजीवित साधूनां यशोजीवितं कीर्त्तिजीवितञ्च यथा महावीरस्येति जीवित ञ्चायु रेवेति इहच सयमायुषा यश: कीर्त्यायुषा चाधिकार इति एव शेषपदाना यथा सम्भव न्निक्षेपोवाच्य इति ॥ उक्त. सूत्रालापकनिष्पन्ननिक्षेप: पदार्थ: पु नरेव इहकिल सुधर्मस्वामी पचमोगणधरदेवो जम्बूनामान स्वशिष्य मतिपादयाञ्चकार श्रुत माकर्णित मे मया आयुसति आयु: जीवितं तत्सयमप्रधान तया प्रशस्त मभूतम्वा विद्यते यस्या सा वायुष्मां स्तस्यामन्त्रण हेआयुष्मन् शिष्य तेणति य: सन्निहितव्यवहितमूक्ष्मबादरबाह्याभ्यन्तरसकलपदार्थ प्व्याह तवचनतयाप्तत्वेन जगति प्रतीत: अथवा पूर्वभवोपात्ततीर्थकरनामकर्मादिलक्षणपरमपुण्यप्राग्भारोविलीनानादिकालालीनमिथ्यादर्शनादिवासन: परिहृ तमहाराज्यो दिव्याद्युपसर्गसमर्गाविचलितशुभध्यानमार्गोभास्करइव घनघातिकर्मघनाघनपटलविघटनोल्लसितविमलकेवलभानुमण्डलो विबुधपतिषट्प दपटलजुष्टपदपद्मो मध्यमाभिधानपुरीप्रथमप्रवर्त्तितप्रवचनो जिनो महावीर स्तेन भगवता ष्टमहाप्रातिहार्यरूपसमग्रैश्वर्यादियुक्तेन एव मित्यमुना वक्ष्यमा

णेनै कत्वादिना प्रकारेणा ख्यातमिति आमर्यादया जीवाजीवलक्षणासङ्कीर्णतारूपतया भिविधिना वा समस्तवस्तुविस्तारव्यापनलक्षणेन ख्यातं कथित मा
ख्यात मात्मादिवस्तुजात मितिगम्यते अत्रच श्रुतमित्यनेना वधारणाभिधायिना स्वय मवधारितमेवा न्यस्मै प्रतिपादनीय मित्याह अन्यथा भिधाने मत्यु
तापायसम्भवात् उक्तञ्च किंइत्तोपावयर समत्रणहिगयधम्मसब्भावो अन्नकुदेसणाए कडयरागमिपाडेइत्ति ॥ १ ॥ मयेत्यनेनो पक्रमद्वाराभिहितभावप्रमाण
द्वारगतात्मानन्तरपरम्परभेदभिन्नागमो य स्वच्यमाणो गून्थो ऽर्थतो अनतरागमः सूत्रतस्त्वात्मागम इत्याह आयुष न्नित्यनेनतु कोमलवचोभिः शिष्य
मनः प्रह्लादगता चार्येणो पदेशो देय इत्याह उक्तच धम्ममइएहिअइसु दरेहिंकारणगुणोवणीएहि पल्हायतोयमण सीसचोएइआयरिओत्ति ॥ १ ॥ आयुष
त्वाभिधानचा त्यत मात्हादक माणिना मायुषो त्यतभीष्टत्वाद्यतउच्यते सव्वेपाणापियाउयाअप्पियबहा सुहासयादुक्खपडिकूला सव्वेजीविउकामा सव्वे
सिजीवियपियति तथा तृणायापिनमन्यन्ते पुत्रदारार्थसम्पदः जीवितार्थैनरास्तेन तेषामायुरतिप्रिय मिति ॥ १ ॥ अथवा आयुष्मन्नित्यनेन ग्रहणधारणा
दिगुणवते शिष्याय शास्त्रार्थोदेय इति ज्ञापनार्थ सकलगुणाधारभूतत्वेना शेषगुणोपलक्षणेन चिरायुर्लक्षणगुणेनशिष्यामंत्रणमकारि यतउक्तं वुड्ढेविदोणमेहे
नकाण्हभूमीएलोट्टएउदयं गहणधरणसमत्थेइय देयमच्छित्तकारिम्मि ॥ १ ॥ विपर्ययहेतु दोष इति आहच आयरिएसुत्तम्मिय परिवाओसुत्तअत्थपलिम
थो अन्नेसिपियहाणी पुच्छाविनदुब्बदावंज्झत्ति ॥ १ ॥ तेने त्यनेनतु आप्तत्वादिगुणप्रसिद्धताभिधायकेन प्रस्तुताध्ययनप्रमाण माह वक्तुर्गुणापेक्षत्वाद्वचन
प्रामाण्यस्येति भगवतेत्यनेनतु प्रस्तुताध्ययनस्यो पादेयता माह अतिशयवान् किलो पादेय स्त द्वचनमपि तथेति अथवा तेणति अनेनो पोद्घातनिर्युक्त्यन्त
र्गत निर्गमद्वार माह योहि मिथ्यात्वतमः प्रभृतिभ्यो दोषेभ्यो निर्गतस्ततो निर्गतमिद मध्ययन मेनतो अपापाया कालतो वैशाखशुद्धैकादश्या मूर्वाह्णे
भावे क्षायिके वर्त्तमाना दिति एवच गुरुपर्वक्रमलक्षणः सम्बन्धोस्य प्रदर्शितोभवति तथा तथाविधेनभगवता यदुक्तन्तत्सप्रयोजनमेव भवतीति सामान्य

तः सप्रयोजनता चास्यो क्ता नहि पुरुषार्थानुपयोगिभगवन्तो भाषन्ते भगवत्वहानेः अतएव चास्यो पायोपेयभावलक्षणः सम्बन्धोपि दर्शित इदंहि भग वदाख्यात ग्रन्थरूपापन्न मुपायः पुरुषार्थस्तूपेय इति अतएव चान श्रोतारः श्रवणे प्रवर्तिताः यतः सिद्धार्थसिद्धसम्बन्धं श्रोतुंश्रोताप्रवर्त्तते शास्त्रादौतेनव क्तव्यः सम्बन्धः सप्रयोजनइति ॥ १ ॥ एवमित्यनेनतु भगवद्वचना दात्मवचनस्या नुत्तीर्णता माह ऽतएव स्ववचनस्यप्रामाण्य सर्वज्ञवचनानुवादमात्रत्वा द स्येति अथवा एव मित्येकत्वादिप्रकारो भिधेयतया निर्दिष्टः निरभिधेयताशङ्कया श्रोतॄणा काकदन्तपरिक्षायामिवा प्रवृत्ति रत्र माभूदिति आख्यात मि त्यनेनतु नापौरुषेयवचनरूप मिद न्तस्या सम्भवादित्याह यतउक्तं वेयवयणनमाणं अपोरुसेयंननिम्मियंजेण इदमच्चंतविरुद्धं वयणाचअपोरुसेयंच ॥ १ ॥ जं वुत्तइत्तिवयण पुरिसाभावेउनेवमेवति तातस्सेवाभावो नियमेणअपोरुसेयत्तेइति ॥ १ ॥ अथवा आख्यातभगवतेद न कुड्यादिनिःसृतं यथा कश्चिदभ्युपग म्यते तस्मिन्ध्यानसमापन्ने चिन्तारत्नवदास्थिते निःसरन्तियथाकाम कुड्यादिभ्योपिदेशना ॥ इत्यस्या नेना नभ्युपगममाह ॥ यतः कुड्यादिनिःसृतानान्तु नस्यादाप्तोपदिष्टता विश्वास श्चनतासुस्या त्कोनेमाःकीर्त्तिताइति ॥ १ ॥ समस्तपदसमुदायेन त्वात्मौद्धत्यपरिहारेण गुरुगुणप्रभावनापरै रेव विनेयेभ्यो दे शनाविधेये त्याह ॥ एव हि तेषु भक्तिपरता स्यात् ययाच विद्यादे रपि सफलता स्या दिति यदुक्तं भत्तीएजिणवयण खिज्जतोपुव्वसचियाकम्मा आयरि यनमोक्कारेण विज्जामंतायसिज्झंतित्ति ॥ १ ॥ नमस्कारश्च भक्ति रेवेति अथवा आउसतेणति भगवद्विशेषण आयुष्मता भगवता चिरजीविनेत्यर्थः अनेन भगवद्बहुमानगर्भेण मङ्गलं अभिहितं भगवद्बहुमानस्य मङ्गलत्वा दिति चोक्तमेव यद्वा आयुषतेति पराऽर्थप्रवृत्त्यादिना प्रशस्त मायु र्धारयता नतुमुक्ति मवाप्यापि तीर्थनिकारादिदर्शना त्पुन रिहायातेना ऽभिमानादिभावतो ऽप्रशस्तं यथोच्यते कैश्चित् ज्ञानिनोधर्म्मतीर्थस्य कर्त्तारःपरमम्पद गत्वागच्छंति भूयोपि भवन्तीर्थनिकारतः ॥ १ ॥ एव ह्यनुन्मूलितरागादिदोषत्वा त्तद्वचसो ऽप्रामाण्य मेव स्या न्निःशेषोन्मूलनेहि रागादीनां कुतः पुनरिहागमनसम्भव

इति अथवा आयुषता प्राणधारणधर्म्मवता नतु सदा सुखेन तस्या कारणत्वेना ख्यातत्वासम्भवा दिति यदिवा आवसतेणंति मयेत्यस्य विशेषण त्वेत पा ठिति गुरुदर्शितमर्यादया वसता अनेन तत्वतो गुरुमर्यादावर्तिस्वरूपत्वात् गुरुकुलवासस्य तद्विधान मर्थत उक्तं ज्ञानादिहेतुत्वा त्तस्य उक्तञ्च नाणस्स होइ भागी थिरयरओ दंसणेचरित्तेय धन्नाआवकहाए गुरुकुलवासनमुचंति ॥ १ ॥ गीयावासोरईधम्मे अणाययणवज्जणा निग्गहोयकसायाणं एयंधीरस्ससासण ति ॥ १ ॥ अथवा आउसतेण आमृशता भगवत्पादारविन्द भक्तितः करतलयुगलादिना स्पृशता नेनै तदाह अधिगतसकलशास्त्रेणापि गुरुविश्रामणादि विनयकृत्य नमोक्तव्य मुक्तं हि जहाहिअग्गीजलणंणमंसे णाणाहुतमंतपयाहिसित्तं एवायरीयंउवचिट्ठएज्जा अणंतनाणोवगओविसंतोति ॥ १ ॥ यद्वा ॥ आउसतेणंति आजुषमाणेन श्रवणविधिमर्यादया गुरूनासेवमानेन अनेनाप्येतदाह विधिनै वोचितदेशस्थेन गुरुसकाशा च्छ्रोतव्यं नतु यथाकथंचित् आहच निद्दाविगहापरिव ज्जिएहिंगुत्तेहिंपंजलिउडेहिं भत्तिबहुमाणपुव्वं उवउत्तेहिंसुणेयव्व मित्यादि ॥ १ ॥ एवं सुत्ताः पदार्थः पदविग्रहस्तु सामासिकपद विषयः सचारस्मात मित्यादिषु दर्शित इति ॥ इदानीं चालनाप्रत्यवस्थाने तेच शब्दतो ऽर्थत स तत्र शब्दतः ननु मे इत्यस्य मम मह्यंचेति व्याख्यान मुचितं षष्ठीचतुर्थ्यो रेवै कवचनां तस्य स्मदस्य मे इत्यादेशा दिति अत्रोच्यते मे इत्यय स्त्रिगन्तिप्रतिरूपको व्ययशब्द स्तृतीयैकवचनाताऽस्मच्छब्दार्थे वर्त्ततेइति न दोषः अर्थतस्तु चालना ननु वस्तु नित्य म्वा स्या दनित्य म्वा नित्यचे त्तर्हि नित्यस्या प्रच्युतानुत्पन्नस्थिरैकस्वरूपत्वा द्यो भगवतः सकाशे श्रोतृत्वस्वभावः स एवच कथं शिष्योपदेशकालस्वभाव इति किंच शिष्योपदेशकालत्वस्य पूर्वस्वभावत्यागेयास्यादत्यागेवा यदित्यागे हत हत म्वस्तुनो नित्यत्व वस्तुनः स्वभावात्यति रिक्तत्वेन तत्त्यागेतत्त्वते रिति अपरित्याग इतिचे न्न विरुद्धयोः स्वभावयो र्युगपदसम्भवा दिति अथवा नित्यमितिपक्ष स्तदपि न निरन्वयनाशेहि श्रोतुः श्र वणकाल एव विनष्टत्वा त्कथनावसरे ऽन्यस्यैवोत्पन्नत्वा दकथनप्रसङ्गः यज्ञदत्तसुतस्य देवदत्ताकथनव दिति ॥ अभसमाधि नैगमतेनेति नयद्वारमवतरति

तत्र नैगमसंग्रहव्यवहारऋजुसूत्रशब्दसमभिरूढैवंभूतानया स्तत्राद्या स्त्रयो द्रव्य मेवार्थो स्तीति वादितया द्रव्यार्थिके ऽवतरन्ति इतरेतु पर्याय एवार्थो स्ती ति वादितया पर्यायार्थिकनये तदेव मुभयमताश्रयणे द्रव्यार्थितयानित्य वस्तु पर्यायार्थितयात्वनित्य मितिनित्यानित्य म्वस्त्विति प्रत्येकपक्षोक्तदोषाभावो गुड नागरादिव दिति एव मेवच सकलव्यवहारप्रवृत्ति रिति उक्तंच सव्वंचियपइसमय उप्पज्जतिनासएयनिच्चं एवचियसुहदुक्ख बंधमोक्खादिसब्भावोत्ति ॥ १ उक्तः सूत्रस्पर्शिकनिर्युक्त्यनुगम स्तदेव मधिकृतसूत्र माश्रित्य सूत्रानुगमसूत्रालापकनिक्षेपसूत्रस्पर्शिकनिर्युक्त्यनुगमतयाऽपदर्शिता आराधितंच सक्रम मा ष्यकारवचन मंतद्यथा सुत्तसुत्ताणुगमो सुत्तालावगकओयनिक्खेवो सुत्तफासियनिज्जुत्ति नयायसमगतुवच्चंतित्ति ॥ १ ॥ एतेषा ञ्चाय म्विषय उक्तो भाष्य कारेण होइकयत्थोवोत्तु सपयच्छेयंसुयंसुयाणुगमो सुत्तालावगनासो नामाइन्नासविनियोगं॥ सुत्तप्फासियनिज्जुत्ति नियोगोसेसओपयत्थाइ पायंसोचियने गम नयाइमयगोयरोहोइत्ति ॥ २ ॥ एव मतिसूत्रं स्वय मनुसरणीय वयन्तु संक्षेपार्थं क्वचि त्किंचिदेव भणिष्याम इति यदाख्यात मभगवता तदधुनो च्यते तत्र सकलपदार्थानां सम्यग्मिथ्याज्ञानश्रद्धानानुष्ठाने विषयीकरणेनो पयोगनयना दात्मनः सर्वपदार्थप्राधान्य मत स्तद्विचारं तावदादावाह ॥ एगेआया एको न द्व्यादिरूप आत्मा जीव. कथञ्चि दितिगम्यते तत्र अतति सतत मवगच्छति अतसातत्यगमन इतिवचना दतधातो र्गत्यर्थत्वा द्गत्यर्थानांच ज्ञाना र्थत्वा दनवरत ञ्ज्ञानातीति निपातना दात्मा जीव उपयोगलक्षणत्वा दस्य सिद्धसंसार्यवस्थाद्वये प्युपयोगभावेन सततावबोधभावात् सततावबोधाभावे चा

## ॥ एगेआया ॥

जीव एकछेज्ञानदर्शन चारित्ररूप अथवा चेतनालक्षणजीव ॥ * ॥ * ॥ * ॥ * ॥

जीवत्वप्रसङ्गात् अजीवस्यच पुन र्जीवत्वाभावात् भावेचा काशादीना मपि तथात्वप्रसंगात् एवंच जीवानादित्वाभ्युपगमाभावप्रसङ्ग इति अथवा अततिस ततं गच्छति स्वकीयान् ज्ञानादिपर्याया नित्यात्मा नन्वेवमाकाशादीना मप्यात्मशब्दव्यपदेशप्रसग स्तेषामपि स्वपर्यायेषु सततगमना दन्यथा अपरिणा मित्वेना वस्तुत्व प्रसङ्गा दिति नैव व्युत्पत्तिमात्रनिमित्तत्वा दस्य उपयोगस्यै वच प्रवृत्तिनिमित्तत्वा ज्जीवएवात्मा नाकाशादि रिति यद्वा संसार्यपेक्षया नानागतिषु सततगमना न्मुक्तापेक्षया च भूततद्भावत्वा दात्मेति तस्य चैकत्व कथचिदेव तथाहि द्रव्यार्थितयै कत्व मेकद्रव्यत्वा दात्मनः प्रदेशार्थतया त्वनेक त्व मसख्येयप्रदेशात्मकत्वा त्तस्येति तत्र द्रव्यच तदर्थश्चेति द्रव्यार्थ स्तस्तभावो द्रव्यार्थता प्रदेशगुणपर्यायाधारता अवयविद्रव्यते तियावत् तथा प्रकृष्टो देशः प्रदेशो निरवयवोंऽशः सचासावर्थश्चेति प्रदेशार्थ स्तस्य भावः प्रदेशार्थता गुणपर्यायाधारावयवलक्षणार्थते तियावत् नन्ववयविद्रव्य मेव नास्ति विकल्पद्वयेन तस्या युज्यमानत्वात् खरविषाणव त्तथा हि अवयविद्रव्य मवयवेभ्यो भिन्न मभिन्न वा स्या न्न ताव दभिन्न मभेदेहि अवयविद्रव्यव दवयवाना मेकत्व स्या द वयवव द्वा ऽवयविद्रव्यस्या प्यनेकत्वं स्या दन्यथा भेदएव स्या द्विरुद्धधर्माध्यासस्य भेदनिबन्धनत्वादिति भिन्नंचे त्त त्तेभ्यः तदा किं मवयवि द्रव्य प्रत्येका मव यवेषु सर्वात्मना समवैति देशतो वेति यदि सर्वात्मना तदा वयवसंख्य मवयविद्रव्यम् स्यात् कथ मेकत्व न्तस्य अथ देशैः समवैति ततो ये देंशे रवयवेषु तद्व र्त्तते तेष्वपि देशेषु तत्कथ प्रवर्त्तते देशतः सर्वतोवा सर्वत से त्तदेवदूषण देशतश्चे त्तेष्वपि देशेषु कथ मित्यादि रनवस्था स्या दित्यत्रो च्यते यदुक्ता म्विकल्पद्वयेन तस्या युज्यमानत्वा दिति तदयुक्त मेकान्तेन भेदाभेदयो रनभ्युपगमात् अवयवा एवहि तथाविधैकपरिणामतया अवयविद्रव्यतया व्यपदिश्यन्ते त एव च तथाविधविचित्रपरिणामापेक्षया अवयवा इति अवयविद्रव्याभावेतु एते घटावयवा एतेच पटावयवा इत्येव मसङ्कीर्णावयवव्यवस्था न स्या त्तथाच प्रति नियतकार्यार्थिनां प्रतिनियतवस्तूपादानं नस्या त्तथाच सर्वं मसमञ्जस मापनीपद्येत सन्निवेशविशेषा द्धटाद्यवयवाना प्रतिनियतता भविष्यतीति चेत् स

त्य केवलं सएव सन्निवेशविशेषो ऽवयविद्रव्य मिति यच्चोच्यते विरुद्धधर्माध्यासोभेदनिबन्धन मिति तदपि न सत् प्रत्यक्षसंवेदनस्य परमार्थापेक्षया भ्रांतत्वेन सव्यवहारापेक्षयात्वभ्रांतत्वेना भ्युपगमादिति यदिनामभ्रान्तत्वमभ्रांतत्व कथ मित्येव मनापि वक्तु शक्यत्वा दिति किंच विद्यते अवयविद्रव्य मव्यभिचा रितया तथैव प्रतिभासमानत्वा दवयववन्नीलव द्वा नचाय मसिद्धो हेतु स्तथा प्रतिभासस्यानुभूयमानत्वा न्नाप्यनैकांतिकत्वविरुद्धत्वे सर्ववस्तुव्यवस्थाया: प्र तिभासाधीनत्वा दन्यथा नकिञ्चनापि वस्तु सिद्धे दिति॥ भवतुनामा वयविद्रव्य केवल मात्मा न विद्यते तस्य प्रत्यक्षादिभि रनुपलभ्यमानत्वा दिति तथा हि नप्रत्यक्षग्राह्योसा वतीन्द्रियत्वात् नाप्यनुमानग्राह्यो ऽनुमानस्य लिङ्गलिङ्गिनो: साक्षा त्सम्बन्धदर्शनेन प्रवृत्ते रिति आगमगम्योपि नासा वागमाना म न्योन्यविसम्वादा दित्यत्रोच्यते केय मनुपलभ्यमानता किमेकपुरुषाश्रिता सकलपुरुषाश्रितावा यदिएकपुरुषाश्रिता न तया त्माभाव: सिद्ध्यति सत्यपि वस्तुनि तस्या सम्भवात् नहिकस्यचित्पुरुषविशेषस्य घटाद्यर्थग्राहकं प्रमाणं न प्रवृत्त मिति सर्वत्र सर्वदा तदभावो निर्णेतु शक्य इति नहि प्रमाणनिवृत्तौ प्रमेय विनिवर्त्तते प्रमेयकार्यत्वात् प्रमाणस्य नच कार्याभावेकारणाभावोदृष्ट इत्यनैकान्तिकतानुपलम्भहेतो: सकलपुरुषाश्रितानुपलम्भस्त्वसिद्ध इत्यसिद्धो हेत् र्नह्यसर्वज्ञेन सर्वे पुरुषा: सर्वदा सर्वत्रात्मान न्नपश्यन्तीति वक्तुशक्य मिति किञ्च विद्यते आत्मा प्रत्यक्षादिभिरुपलभ्यमानत्वात् घटव दिति नचाय मसिद्धो हेतु यतो ऽस्मदादिप्रत्यक्षेणाप्यात्मा तावद्गम्यत एव आत्माहि ज्ञानाद नन्य आत्मधर्मत्वात् ज्ञानस्य तस्यच स्वसम्विदितरूपत्वात् स्वसंविदितत्व श्च ज्ञानस्य नीलज्ञान मुत्पन्न मासी दित्यादिस्मृतिदर्शनात् नह्य स्वसंविदिते ज्ञाने स्मृतिप्रभवो युज्यते प्रमान्तरज्ञानस्यापि स्मृतिगोचरत्वप्रसङ्गा दिति त देव न्तदव्यतिरिक्तज्ञानगुणप्रत्यक्षत्वे आत्मा गुणी प्रत्यक्ष एव रूपगुणप्रत्यक्षत्वे घटगुणिप्रत्यक्षव दिति उक्तञ्च गुणपच्चक्खत्तणओ गुणीविजाओ घडोव्वपच्चक्खो घडउव्वघिप्पइगुणी गुणमित्तगहणओजम्हा ॥ १ ॥ तथा अन्नोणण्णोत्वगुणी होज्जगुणेहिंजइणामसोणन्नो णणुगुणमेत्तगहणे घेप्पइजीवोगुणीसक्खं ॥ १ ॥

अहअसीतोएवं गुणिगोनघडादयोविग्रहत्ता गुणमेत्तगहणाओजोयंमिकुतोवियारोयंति ॥ २ ॥ येतुसकलपदार्थसार्थस्वरूपाविर्भावनसमर्थज्ञानवंत स्तेषां
सर्वात्मनैव प्रत्यक्ष इति तथा ऽनुमानगम्यो प्यात्मा तथाहि विद्यमानकर्तृक मिदं शरीर भोग्यत्वा दोदनादिव व्योमकुसुमं विपक्षः सच कर्ता जीव इति
नत्वोदनकर्तृवन्मूर्त्त आत्मा सिद्धातीति साध्यविरुद्धोहेतु रिति नैव संसारिणो मूर्त्तत्वेना प्यभ्युपगमा दाहच जोकत्तासोजीवो सक्षविरुद्धोत्तितेमइंभोत्ता
मोत्ताइपसंगाओ तत्तोससारिणोदोसोत्ति ॥ १ ॥ नचाय मेकान्तो यदुत लिंग्यविनाभूतलिङ्गोपलम्भव्यतिरेकेणा नुमानस्यै कान्ततो ऽप्रवृत्ति रिति हसिता
दिलिङ्गविशेषस्य गृहाख्यलिंग्यविनाभावग्रहणमन्तरेणापि गृहगमकत्वदर्शनात् नच देहएव गृही येनान्यदेहे दर्शनमविनाभावग्रहणनियामकं भवतीति उ
क्तञ्च सोनेगंतोजम्हा लिंगेहिंसमंअदिठ्ठपुव्वोवि गहलिंगदरिसणाओ गहाणुमेओसरीरमिति ॥ १ ॥ आगमगम्यत्वंत्वात्मन एगेआया अतएववचना न चा
स्यागमान्तरे विसंवादः सम्भावनीयः सुनिश्चितास प्रणीतत्वा दस्येति वक्तुव्यताव्यमन तत्तु स्थानांतरादवसेयमिति किं चा त्मभावे जातिस्मरणादय स्तथा
प्रेतीभूतपितृपितामहादिकृतानुग्रहो यथा तौ च न प्राप्नुयुरिति आत्मनश्च सप्रदेशत्वमवश्यमभ्युपगन्तव्यं ॥ निरवयवत्वे तु हस्ताद्यवयवानामेकत्व प्रसङ्गः
प्रत्यवयव स्पर्शाद्यनुपलब्धिप्रसङ्ग श्चेति सप्रदेश आत्मा प्रत्यवयव चैतन्यलक्षणतद्गुणोपलम्भात् प्रतिग्रीवाद्यवयवोपलब्धरूपगुणघटवदिति स्थापित मेत
द्रव्यार्थतयैक आत्मेति अथवा एक आत्मा कथंचि दिति प्रतिक्षण सम्भव दपरापरकालकृतकुमारतरुणनरनारकत्वादिपर्याये रुत्पादविनाशयोगेपि द्र
व्यार्थतयैकत्वा दस्य यद्यपि हि कालकृतपर्यायै रुत्पद्यते नश्यति च वस्तु तथापि स्वपरपर्यायरूपानन्तधर्मात्मकत्वा त्तस्य न सर्वथानाशोयुक्त इति आहच
नहि सव्वहाविणासो अद्धपज्जायमित्तनासंमि सपरपज्जायाणंत धम्मणोवत्थुणोजुत्तोत्ति १ किंच प्रतिक्षण क्षयिणो भावा इत्येतस्मा द्वचना त्प्रतिपाद्यस्य यत्
क्षणभंगविज्ञान मुपजायते तदसंख्यातसमयैरेव वाक्यार्थग्रहणपरिणामा ज्जायते नतु प्रतिपत्तुः प्रतिसमयं विनाशेसति यत एकैक मप्यक्षरं पदसत्कं सं

ख्यातीतसमयसभूतं संख्यातानि चाक्षराणि पदं संख्यातपदं च वाक्यं तदर्थग्रहणपरिणामा च सर्वं क्षणभंगुरमितिसंविज्ञानं भवे त्तच्चायुक्तं समयनष्टस्येति
आहच वाहवासव्वं खणियं विन्नायजइमईसुयाश्रोत्ति तदसखसमयसुत्तत्थ गहणपरिणामभोजुत्तं ॥ १ ॥ नउपइसमयविणासे ज्जेणेक्केक्कक्खरंपियपयस्स
सखाइ यसमाइयसखेज्जाइंपयताइं ॥ २ ॥ सखेज्जपयवक्क तदत्थगहणपरिणामश्रोहोज्जा सव्वक्खणभंगप्पा णतदजुत्तंसमयनट्ठस्सत्ति ॥ ३ ॥ तथा सर्वथो
च्छेदे तृष्णादयो न घटंते पूर्वसंस्कारानुवृत्तावेव तेषां युज्यमानत्वा दाहच तेत्तीसमोकिलामोसारिक्खविपक्खपच्चयाईणि अज्झयणज्झाणभावणा यकासच्च
नाससञ्चनासंमिन्ति १ ॥ तत्र तृप्ति र्प्रोणिः श्रमो ऽध्वादिखेदः क्लमो ग्लानिः साद्दृश्य साधर्म्यं विपक्षो वैधर्म्यं प्रत्ययो ऽवबोधः शेषपदानि प्रतीतानि इ
त्यादि बहुवक्तव्यं तत्तु स्थानांतरादवसेय मिति तदेव आत्मा स्थितिभवनभंगरूपापेक्षया नित्यो नित्यत्वाच्चैको भवनभंगरूपापेक्षया त्वनित्यो ऽनित्यत्वा च्चा
नेक इति आहच जमणतपज्जयमयवत्थुभवणंविचित्तपरिणामं ठिइविभवभंगरूव णिच्चाणिच्चाइतोभिमयति ॥ १ ॥ एवच सुहदुक्खबंधमोक्खो उभयनयमया
णुवत्तिणोजुत्ता एगयरपरिच्चाए सव्वव्ववहारवोच्छित्तित्ति ॥ १ ॥ अथवा एकआत्मा कथचिदेवेति यतो जैनानां नहि सर्वथा किंचिद्वस्तु एकमनेकं
चास्ति सामान्यविशेषरूपत्वाद्वस्तुनः अथ ब्रूया द्विशेषरूप मेव वस्तु सामान्यस्यविशेषेभ्यो भेदाभेदाभ्या चिंत्यमानस्या योगा त्तथाहि सामान्यं विशेषेभ्यो
भिन्न मभिन्न वा स्यान्नभिन्न मुपलंभाभावा न्नचा नुपलभ्यमानमपि सत्तया व्यवहर्तुं शक्यं खरविषाणस्यापि तथाप्रसगात् अथाभिन्नमितिपक्ष स्तयाच
सामान्यमात्र वा स्या द्विशेषमात्र च्चेति नह्येकस्मिन् सामान्य मेकं विशेषा स्त्वनेकारूपा इत्यसंकीर्णा वस्तुव्यवस्था स्यादिति अत्रोच्यते नह्यस्माभिः सामान्य
विशेषयो रेकान्तेन भेदो ऽभेदोवा भ्युपगम्यते अपितु विशेषा एव प्रधानीकृता. तुल्यरूपा उपसर्जनीकृततुल्यरूपाः विषसतया प्रज्ञायमानाविशेषा व्य
पदिश्यन्ते तएवच विशेषा उपसर्जनीकृताः तुल्यरूपाः प्रधानीकृततुल्यरूपा. समतया प्रज्ञायमानाः सामान्य मिति व्यपदिश्यन्तइति आहच निर्विशेष

ग्टहीताश्च भेदा:सामान्यमुच्यते ततोविशेषात्सामान्यं विशिष्टत्वनयुज्यते ॥ १ ॥ वैधर्म्यसमभावेन ज्ञायमानाद्दमेकिल प्रकल्पयन्तिसामान्य विशेषस्थिति मात्मनीति ॥ २ ॥ तद्देव सामान्यरूपेणात्मा एको विशेषरूपेण त्वनेको नचात्मनान्तुल्य रूपन्नास्ति एकात्मव्यतिरेकेण शेषात्मना मनात्मत्वप्रसगा दिति तुल्यश्चरूप मुपयोग उपयोगलक्षणोजीवइतिवचना त्तद्देव मुपयोगरूपैकलक्षणत्वा त्सर्व एवात्मान: एकरूपा. एवञ्च एकलक्षणत्वा देक आत्मेति ॥ अथवा जन्ममरणसुखदु'खादिसंवेदने ष्वसहायत्वा देक आत्मेति भावनीय मिति इह सर्वसूत्रेषु कथचिदि त्यनुस्मरणीय कथचिद्वादस्या विरोधे सर्ववस्तु व्यवस्थानिबन्धनत्वात् उक्तंच स्याद्वादायनमस्तस्मै यविनासकला:क्रिया लोकद्वितयभाविन्यो नैवसागत्यमासते ॥ १ ॥ तथा नयास्तवस्यात्पदसत्वलांछि ता रसोपविद्धाइवलोहधातव: भवंत्यभिप्रेतफलायतस्ततो भवन्तमार्या'प्रणताहितैषिण इति ॥ २ ॥ आत्मन एकत्व मुक्तान्यायतो भ्युपगच्छद्भि रपि कैश्चि न्निष्क्रियत्व तस्या भ्युपगत मत स्तन्निराकरणाय तस्य क्रियावत्व मभिधित्सु: क्रियाया: कारणभूत न्दण्डस्वरूपं प्रथमं ताव दभिधातुमाह एगेदण्डे एको वि वक्षितविशेषत्वात् दण्ड्यते ज्ञानाद्यैश्वर्यापहारतो ऽसारीक्रियते आत्मा नेनेति दण्ड: सच द्रव्यतो भावतश्च द्रव्यतो यष्टि र्भावतो दु:प्रयुक्त ्मन:प्रभृति ॥ तेन चा त्मा क्रिया करोतीति तामाह एगाकिरिया एका अविवक्षितविशेषतया करणमात्रविवक्षणात् करणक्रिया कायिक्यादिकेति अथवा एगेदण्डे एगा किरियत्ति सूत्रद्वयेना त्मनो ऽक्रियत्वनिरासेन सक्रियत्व माह यतो दण्डक्रियाशब्दाभ्यां त्रयोदश क्रियास्थानानि प्रतिपादितानि तत्रार्थदण्डानर्थदण्डहिंसा

॥ एगेदंडे एगाकिरिया ॥

माठें मने बचने कायायें दंडीये ते एकदंड १। एक क्रियाछे काया प्रमुखथी पापलागे ते क्रिया १ ॥

दंडकमादंडदृष्टिविपर्यासदंडरूपः पंचविंशतिः परमाधार्मिकदेवरचयत्री दंडयन्तिनरकान् [illegible] हिंसाक्रिया इति क्रियाभेदेनतु

इत्यादिरूपप्रत्यया अध्यात्मिकी मानप्रत्यया मित्रद्वेषप्रत्यया मायाप्रत्यया लोभप्रत्यया ईर्यापथिकीति षड्विधा क्रियोक्ता तदेवमत्र करणमात्रतामात्रा

ति दंडक्रियायाः स्वरूपविशेष मुपरिष्टात् व्याख्यानएव वक्ष्याम इति अक्रियावत्वनिरासपरा स्मन एवं यैः क्रिया क्रियावत्व मभ्युपगत मात्मन स्तै भोक्तृत्व

मभ्युपगत मतोभुजिक्रियानिर्वर्त्तनसामर्थ्यंसति भोक्तृत्व मुपपद्यते तदेवच क्रियावत्वं नास्तीति यच प्रकृतिः करोति पुरुषस्तु भुंक्ते प्रतिबिंबमात्रेणेति

तदयुक्तम् सर्वथैवक्रियावत्वमंतरेण प्रकृत्युपधानयोगेपि प्रतिबिंबभावानुपपत्तेः प्रतिबिम्बस्य रूपान्तरपरिणमनरूपत्वात् अथ प्रकृतिविकाररूपायाः बुद्धेरेव

सुखाद्यर्थप्रतिबिंबनं नात्मन स्तर्हि नात्मभोग स्तद् वस्थता तस्येति आयापि वस्तुतस्त्व न्यत्तु स्थानांतरादवसेय मिति ॥ उक्तरूपस्या त्मन आ

धारस्वरूपनिरूपणायाह एगेलोएत्ति एको अविवक्षितासंख्यप्रदेश अधस्तिर्यगादिदिग्भेदतया लोक्यते दृश्यते केवलालोकेने तिलोकः धर्मास्तिकायादि

द्रव्याधारभूत आकाशविशेष स्तदुक्तम् धर्मादीनां वृत्ति र्द्रव्याणां भवति यत्र तत् क्षेत्रं तै र्द्रव्यैः सह लोक स्तद्विपरीतं ह्यलोकाख्यमिति अथवा लोको ना

मादि रष्टधा आहच नामठवणादविए खेत्तेकालेभवेयभावेय पज्जवलोएयतहा अट्ठविहोलोयनिक्खेवोत्ति ॥ १ ॥ नामस्थापने सुज्ञाते द्रव्यतो लोको

जीवाजीवद्रव्यरूपः क्षेत्रतोलोक अथवाऽऽकाशमात्र मनंतप्रदेशात्मकम् काललोकः समयावलिकादिः भवलोको नारकादय स्तस्मिन् २ भवे वर्त्तमाना यथाम

## ॥ एगेलोए ॥

१४ राजरूप एकलोक षट्द्रव्यनूं थानक १ ॥

॥ २ ॥ आत्माच लोकाकृति र्धर्म्माधर्म्मास्तिकायोपगृहीतः सदङ्गः सक्रियश्च कार्म्मणायच्यत इति बन्धनिरूपणायाह [एगेबंधे] बन्धनम्बन्धः सकषायत्वात् जीवः कर्म्मणो योग्यान् पुद्गलाना दत्ते यत् स बन्धइतिभावः सच प्रकृतिस्थितिप्रदेशानुभावभेदात् चतुर्विधोपि बन्धसामान्या देकः मुक्तस्यसतः पुनर्बन्धा भावाद्वा एको बन्धइति अथवा द्रव्यतोबन्धो निगडादिभि र्भावतः कर्म्मणा तयोश्च बन्धनसामान्या देकोबन्ध इति ननु बन्धो जीवकर्म्मणोः संयोगो ऽभि मेतः सचक्या दिमा नादिरहितोवा स्या दितिकल्पनात्रयं तत्र यद्या दिमा निति पक्ष स्तदा किं पूर्वमात्मा पश्चात् कर्म्म अथ पूर्वं कर्म्म पश्चादात्मा उत यु गपत्कर्म्मात्मानो सम्भवेतामिति पक्षोविकल्पाः तत्र नताव त्पूर्वमात्मसम्भूतिः सम्भाव्यते निर्हेतुकत्वात् खरविषाणवत् अकारणप्रसूतस्य वा ऽकारणत एवो परमः स्या दृष्टा नादिरिया त्मा तथाप्यकारणत्वा न्नास्य कर्म्मणो योग उपपद्यते नभोवत् अथाकारणेपि कर्म्मणो योग स्या त्तर्हि स मुक्तस्यापि स्यादिति अथवा सा वात्मा नित्य मुक्तएव तर्हि किं मोक्षजिज्ञासया बन्धाभावेच मुक्तव्यपदेशाभाव एवा काशवदिति नापि कर्म्मणः प्राक् प्रभूति रिति द्वितीयोवि कल्पः सङ्गच्छते कर्त्तुरभावात् नच क्रियमाणस्य कर्म्मव्यपदेशो ऽभिमतः अकारणप्रसूते र्वा कारणत एवोपरमः स्यादिति युगपदुत्पत्तिलक्षणतृतीयपक्षोपि नक्षमो ऽकारणत्वादेव नच युगपदुत्पत्तौ सत्या मय कर्त्ता कर्म्मेद मितिव्यपदेशो युक्तरूपः सव्येतर गोविषाणवदिति अथा दिरहितो जीवकर्म्मयोग इति पक्ष स्तदा नादित्वादेव नात्मकर्म्मवियोगः स्या दात्माकाशसंयोगवदिति अत्रोच्यते आदिमत्संयोगपक्षदोषाः अनभ्युपगमादेवनिरस्ताः यश्चादिरहितजीव

## ॥ एगेबंधे ॥

बंध एकछे कर्मरूपकपासथी बंधाये ॥

कर्म्मयोगो ऽभिधीयते अनादित्वा दात्मकर्म्मवियोगा इति तदयुक्त मनादित्वेपि संयोगस्यवियोगोपलब्धेः कांचनोपलयोरिवे ति यदाह जहवेहकंचणोवल सजोगोणादिसतइगओवि वोच्छिज्जइवोवायं तहजोगोजीवकम्माणति ॥ १ ॥ तथा अनादेरपिसन्तानस्य विनाशो दृष्टो बीजांकुरसन्तानवत् आहच अ न्नतरमणिव्वत्तिय कज्जंबीयंतराणिजविहियं तत्थहओसताणोकुक्कुडिअंडाइयाणवत्ति ॥ १ ॥ अनादिबन्धसद्भावेपि भव्यात्मनः कस्यचि न्मोचो भवतीति मो चस्वरूपमाह ॥ [एगेमोक्खे] मोचन कर्म्मपाशवियोजन मात्मनो मोचः आहच कृत्स्नकर्म्मचयान्मोचः । सचैको ज्ञानावरणादिकर्म्मापेचया ऽष्टविधोपि मोच नसामान्यात् मुक्तस्यवा पुन र्मोचाभावात् ईषत्प्राग्भाराख्यचेत्रलचणोवा द्रव्यार्थतयैकः अथवा द्रव्यतो मोचो निगडादिती भावतः कर्म्मत स्तयोश्च मोच नसामान्या देकोमोच इति नन्वपर्यवसानो जीवकर्म्मसंयोगो नादित्वा ज्जीवाकाशसंयोगव दिति कथ न्मोचसम्भव कर्म्मवियोगरूपत्वा दस्या नोच्यते अनादि त्वादित्यनैकांतिको हेतुः धातुकांचनसंयोगो ह्यनादिः सच सपर्यवसानो दृष्टः क्रियाविशेषादेवमय मपि जीवकर्म्मयोगः सम्यग्दर्शनज्ञानचारित्रैः सपर्यवसा नो भविष्यति जीवकर्म्मवियोगश्च मोच उच्यत इति ननु नारकादिपर्यायस्वभावः संसारो नान्यः तेभ्यश्च नारकत्वादिपर्यायेभ्यो भिन्नो नाम नकश्चि ज्जीवो नारकादयएव पर्याया जीवाः तदनर्थान्तरत्वा दिति ससाराभावे जीवाभावएव नारकादिपर्यायस्वरूपव दित्यसत् पदार्थो मोच इति आहच जंनारगा दिभावो ससारोनारगाइभिन्नोय कोजीवोतमनसि तस्सासेजीवनासोत्ति ॥ १ ॥ अत्र प्रतिविधीयते यदुक्तं नारकादिपर्यायससाराभावे सर्वथा जीवा

## ॥ एगेमोरके ॥

एक मोचछे सकल कर्मचयरूप ॥

भावएवा नर्थान्तरत्वा न्नारकादिपर्यायस्वरूपवं दिति अय मनैकांतिकोहेतुः हेम्नो मुद्रिकायाश्वा नर्थान्तरत्वंसिद्ध नच मुद्रिकाकारविनाशे हेमविनाश इति तद्वन्नारकादिपर्यायमात्रनाशे सर्वथा जीवनाशो नभविष्यतीति आहच नहिनारकादिपज्जायमेत्तनासमिसव्वहानासो जीवदव्वस्समओ मुद्दानासेव्वहेम स्सत्ति ॥ १ ॥ अपिच कम्मकओससारो तन्नासेतस्सजुज्जएनासो जीवत्तमकम्मकय तन्नासेतस्सकोनासोत्ति ॥ १ ॥ मोचश्च पुण्यपापचयाद्भवतीति पुण्यपा पयोः स्वरूप वाच्य न्तत्रापि मोचस्य पुण्यस्यच शुभस्वरूपसाधर्म्यात् पुण्यं तावदाह [एगेपुण्णे] पुणशुभे इतिवचनात् पुणतिशुभीकरोति पुनातिवा पवित्री करोत्यात्मानमिति पुण्य शुभकर्म्मसद्वेद्यादिद्विचत्वारिंशद्विध यथोक्त सायं १ उच्चागोय २ नरतिरिदेवाउ ५ नामएयाउ मणुयदुगं ७ देवदुग ९ पंचिंदियजाइ १० तणुपणग १५ ॥ १ ॥ अगोवंगतियपिय १८ सघयणंवज्जरिसहनाराय १० पढमचियसठाणं वन्नाइचउक्कसुपसत्थ २४ ॥ २ ॥ अगुरुलहु २५ पराघाय २६ उस्सास २७ आयवच २८ उज्जोयं २९ सुपसत्थाविहयगई ३० तसाइदसगच ४० णिम्माण ४१ ॥ ३ ॥ तित्थयरेणसहिया वायालापुन्नपगईओत्ति ॥ ४ ॥ एव हिचत्वारिंश द्विधमपि अथवा पुण्यानुवन्धिपापानुवन्धिभेदेन द्विविधमपि अथवा प्रतिप्राणिविचित्रत्वा दनन्तभेदमपि पुण्यसामान्यादेकमिति अथ कर्म्मैव नविद्यते प्र माणगोचरातिक्रान्तत्वात् शशविषाणवदिति कुतः पुण्यकर्म्मसत्तेति असत्य मेत द्यतो नुमानसिद्ध कर्म्म तथाहि सुखदुःखानुभूते र्हेतु रस्ति कार्यत्वा दङ्कुरस्येव वीज यस्य हेतुत्व न्तत्कर्म्म तस्मादस्तिकर्म्मेति स्यान्मतिः सुखदुःखानुभूते र्दृष्टएव हेतु रिष्टानिष्टविषयप्राप्तिमयो भविष्यति किमिह कर्म्मपरिकल्पनया नहि

## ॥ एगेपुण्णे ॥

पुन्य एकछे शुभकर्म ४२ प्रकृति रूप ॥

दृष्टं निमित्तमपास्य निमित्तान्तरान्वेषणं युक्तरूप मिति नैवव्यभिचारात् इह योहि द्वयो रिष्टशब्दादिविषयसुखसाधनसमेतयोरेकस्य तत्फलेविशेषो दुः
खानुभूतिमयो यश्चा निष्टसाधनसमेतयोरेकस्य तत्फलेविशेषः सुखानुभूतिमयो नासौहेतुमंतरेण सम्भाव्यते नच तद्धेतुक एवा सौ युक्तः साधनानां विपर्या
सादिति पारिशेष्या द्विशिष्टहेतुमानसौ कार्यत्वा द्घटवत् यश्च समानसाधनसमेतयो स्तत्फलविशेषहेतुस्तत्कर्म्म तस्मा दस्तिकर्मेति आहच जोतुल्लसाहणा
ण फलेविसेसोनसोविणाहेउ कज्जत्तणओगोयम घडोव्वहेऊयसेकम्मति ॥ १ ॥ किंच अन्यदेहपूर्वक मिदं बालशरीर इन्द्रियादिमत्वात् यदि हेंद्रियादिम
त्तदन्यदेहपूर्वकं दृष्टं यथा बालदेहपूर्वकं युवशरीरमिन्द्रियादिमच्चेद बालशरीरकं तस्मादन्यशरीरपूर्वकं यच्छरीरपूर्वकं चेद् बालकशरीरं तत्कर्म्म तस्मा द
स्ति कर्म्मेति आहच बालसरीरंदेह तरपुव्वइंदियाइमत्ताओ जहबालदेहपुव्वो जुवदेहोपुव्वमिहकम्मति ॥ १ ॥ ननुकर्म्मसद्भावेपि पापमेवैकं विद्यते
पदार्थो नपुण्यनामास्तियत्तुपुण्यफलं सुखमुच्यते तत्पापस्यैव तरतमयोगादपकृष्टस्य फलं यतः पापस्यपरमोत्कर्षे त्यताधमफलता तस्यैव तरतमयोगा पकर्ष
भिन्नस्य मात्रापरिहृद्धिहान्या यावत् प्रकृष्टापकर्ष स्तत्र या काचित् पापमात्रा अवतिष्ठते तस्या मत्यतशुभफलता पापापकर्षा त्तस्यैव पापस्य सर्वात्मना
क्षयो मोक्षः यथा त्यंतापथ्याहारसेवना दनारोग्यं तस्यैवापथ्यस्य किंचित्किंचिदपकर्षाद्यावत् स्तोकापथ्याहारत्व मारोग्यकरं सर्वाहारपरित्यागाच्च प्राण
मोक्षइति आहच पावुक्करिसेधमया तरतमजोगावकरिसवोसुभया तस्सेवखएमोक्खो अपत्थभत्तोवमाणाओत्ति ॥ १ ॥ अत्रोच्यते यदुक्तं मत्यंतापचितात्
पापात् सुखप्रकर्ष इति तदयुक्तं यतो येयं सुखप्रकर्षानुभूतिः सा स्वानुरूपकर्मप्रकर्षजनिता प्रकर्षानुभूतित्वात् दुःखप्रकर्षानुभूतिवत् यथाहि दुःखप्रकर्षा
नुभूतिः स्वानुरूपपापकर्म्मप्रकर्षजनिते तित्वया भ्युपगम्यते तथेयमपि सुखप्रकर्षानुभूतिरिति स्वानुरूपपुण्यकर्मप्रकर्षजनिता भविष्यतीति प्रमाणफलमिति
पुण्यप्रतिपक्षभूत पापमिति तत्स्वरूपमाह [एगेपावे] पाशयतिगुडयत्यात्मानपातयति चात्मन आनन्दरसशोषयति क्षपयतीति पापं तच्च ज्ञानावरणादिद्वा

शीतिभेदं यदाह नाणंतरायदसगं १० दंसणणव १९ मोहनीयछब्बीसं ४५ अस्सायं ४६ निरयाउ ४७ नीयागोएणअडयाला ४८ ॥ १ ॥ निरयदुग २ तिरियदुग ४ जाइचउक्कंच ८ पचसघयणा १३ सठाणावियपचउ १५ वन्नाइचउक्कमएसत्थ २२ ॥ २ ॥ उवघाय २३ कुविहयगई २४ थावरदसगेणहोंतिचोत्तीस ३४ सब्बावोमिलियाओ बासीईपावपगईओ ८२ ॥ ३ ॥ तदेव ह्यशीतिभेदमपि पुण्यानुबन्धिभेदा द्विभेदमपिवा अनन्तसत्वाश्रितत्वादनन्तमपि वा ऽशुभसामान्यादेक मिति ननु कर्मसत्वेपि पुण्यमेवैक कर्मनतत्प्रतिपक्षभूत म्पाप कर्मास्ति शुभाशुभफलाना पुण्यादेव सिद्धे रिति तथाहि यत्परमप्रकृष्टं शुभफल मेतत्पुण्योत्कर्षस्य कार्यं यत्पुन स्तस्मादवकृष्ट मवकृष्टतर मवकृष्टतमञ्च तत्पुण्यस्यैव तरतमयोगापकर्षभिन्नस्य यावत्परमप्रकर्षहानिः परमप्रकर्षहीनस्य च पुण्यस्य परमावकृष्टतमं शुभफल या काचित् शुभमात्रेत्यर्थः दुःखप्रकर्षइति तात्पर्यं न्तस्यैवच परमावकृष्टपुण्यस्य सर्वात्मना क्षये पुण्यात्मकबन्धाभावा न्मोक्षइति यथा त्यतपथ्याहारसेवनात्पुसःपरमारोग्यसुखं तस्यैवच किञ्चित् २ पथ्याहारविवर्ज्जना दपथ्याहारपरिवृद्धे रारोग्यसुखहानिः सर्व्वथैवाहारपरिवर्जना न्माणमोक्ष इति पथ्याहारोपमानचेह पुण्यमिति अनोच्यते येय दुःखप्रकर्षानुभूतिः सा स्वानुरूपकर्म्मप्रकर्षजनिता प्रकर्षानुभूतित्वा त्सौख्यप्रकर्षानुभूतिवत् यथाहि सौख्यप्रकर्षानुभूतिः स्वानुरूपपुण्यकर्म्मप्रकर्षजनितेति त्वया भ्युपगम्यते तथेयमपि दुःखप्रकर्षानुभूतिः स्वानुरूपपापकर्म्मप्रकर्षजनिता भविष्यतीति प्रमाणफल मिति आहच कम्मप्पगरिसजणिय तदवस्सपगरिसाणुभूईओ सोक्खप्पगरिसभूइ जहपुन्नपगरिसप्पभवत्ति ॥ १ ॥ तदिति दुःखमिति ॥ इ

## ॥ एगेपावे ॥

पाप एकछे अशुभ ८२ कर्म प्रकृति रूप ॥

दानी मनन्तरोक्तयोः पुण्यपापकर्म्मणो र्बन्धकारणनिरूपणायाह [एगेश्रासवे] आस्रवन्ति प्रविसति येन कर्म्माण्यात्मनीति आस्रव. कर्म्मबन्धहेतु रितिभावः सचेन्द्रियकषाया ऽव्रतक्रियायोगरूपक्रमेण पञ्च चतुः पच पचविंशति त्रि भेद' उक्तञ्च इंदिय ५ कसाय ४ अव्वय ५ किरिया २५ पणचउअपचपणवीसा जोगातिण्णेवभवे आसवभेयाउआयालत्ति ॥ १ ॥ तदेव मय द्विचत्वारिंशद्विधो अथवा द्विविधो द्रव्यभावभेदा त्तत्र द्रव्यास्रवो यज्जलांतर्गतनावादौ तथा विधपरिणामेनच्छिद्रै र्जलप्रवेशन भावास्रव स्तु यज्जीवानाम्पञ्चेन्द्रियादिच्छिद्रत. कर्म्मजलसञ्चय इति सत्वास्रवसामान्या देकएवेति ॥ अथास्रवप्रतिपचभूत सवरस्वरूपमाह [एगेसवरे] सव्रियते कर्म्म कारण प्राणातिपातादिनिरुध्यते येन परिणामेन स सवरः आस्रवनिरोध इत्यर्थ. सच समितिगुप्तिधर्म्मानुप्रेचा परीषहचारित्र रूपः क्रमेण पंच त्रि दश द्वादश द्वाविंशति पच भेदः आहच समिई ५ गुत्ती ३ धम्मो १० अणुपेह १२ परीसहा २२ चरित्तच ५ सत्ता वन्नभेया पणतिगभेयाइसंवरणेत्ति ॥ १ ॥ अथवा यद्विधा द्रव्यतो भावतश्च तत्र द्रव्यतो जलमध्यगतनावादे रनवरतप्रविशज्जलानां छिद्राणा न्तथाविधद्रव्ये ण स्थगन संवरः भावतस्तु जीवद्रोण्या मास्रवत्कर्म्मजलाना मिन्द्रियादिच्छिद्राणा समित्यादिना निरोधन सवर इति सच द्विविधोपि सवरसामान्या देक इति सम्वरविशेषेवा योग्यवस्थारूपे ,कर्म्मणा स्वेदनैव भवति नतन्य इति वेदनानरूपमाह [एगावेयणा] वेदनवेदना स्वभावेनो दीरणाकरणेन चोदया वलिकाप्रविष्टस्य कर्म्मणो अनुभवन मितिभावः साचज्ञानावरणीयादिकर्म्मापेचया अष्टविधापि विपाकोदयप्रदेशोदयापेचया द्विविधापि अभ्युपगमिक्वो

## ॥ एगेआसवे एगेसंवरे एगावेयणा ॥

एक आस्रव जेणे कर्म बधाये ते ४२ भेदेछे नव तत्व मांछे । एक संवरछे जेणे पापथी रूधीये ५७ भदेछे । एक वेदना छे आठ कर्मनु भोगववो जीवनें ॥

शिरोलोचादिका औपक्रमिकी रोगादिजनिते त्येवञ्च द्विविधापि वेदना सामान्यादेकैवेति अनुभूतरसकर्म्म प्रदेशेभ्यः परिशटतीति वेदनानन्तरं कर्म्मप रिशटनरूपा निर्जरां निरूपयन्नाह [एगाणिज्जरा] निर्जरणनिर्जरा विशरण परिशटनमित्यर्थः साचाष्टविधकर्म्मापेक्षया ऽष्टविधापि द्वादशविधतपोज नितत्वेनच द्वादशविधापि अकामक्षुत्पिपासाशीतातपदंशमशकसहनब्रह्मचर्यधारणाद्यनेकविधकारणजनितत्वेना ऽनेकविधापि द्रव्यतो वस्त्रादे र्भवत. कर्म्मणा मेव द्विविधापि वा निर्जरा सामान्या देकैवेति ननु निर्जरामोक्षयोः कः प्रतिविशेष उच्यते देशत. कर्म्मक्षयोनिर्जरा सर्वतस्तु मोक्ष इति इहच जीवो विशिष्टनिर्जराभाजन म्प्रत्येकशरीरावस्थाया मेव भवति नसाधारणशरीरावस्थाया मतः प्रत्येकशरीरावस्थस्य जीवस्य स्वरूपनिरूपणायाह [एगेजीवे इत्यादि] अथवा उक्ताः सामान्यतः प्रस्तुतशास्त्रव्युत्पादनीया जीवादयो नव पदार्थाः साम्प्रत जीवपदार्थ म्विशेषेण प्ररूपयन्नाह ॥ [एगेजीवेपाडिक्कएणस रीरएण] एकः केवलः जीवितवान् जीवति जीविष्यति चेति जीवः प्राणधारणधर्मा त्मेत्यर्थः एक जीव म्प्रतिगत यच्छरीर म्प्रत्येकशरीरनामकर्म्मोदया त्तत्प्र त्येक न्तदेवप्रत्येकक दीर्घत्वादिप्राकृतत्वा त्तेनप्रत्येककेन शीर्यत इति शरीर न्देह स्तदेवानुकम्पितादिधर्म्मोपेत शरीरक न्तेन लक्षित' तदाश्रित्य एको जीव इत्यर्थः अथवा णकारो वाक्यालङ्कारार्थौ तत एको जीवः प्रत्येकके शरीरे वर्त्तत इतिवाक्यार्थ. स्यादिति इहच पाडिलक्खएण क्वचित्पाठोदृश्यते सच नव्या ख्यातो ऽनवबोधा दिहच वाचनाना मनियतत्वात् सर्वासा व्याख्यातु मशक्यत्वा त्काचिदेव वाचना व्याख्यास्याम इति इह बन्धमोक्षादय आत्मधर्म्मा अन

## ॥ एगाणिज्जरा एगेजीवे पाडिक्कएणं सरीरएणं ॥

एक निर्जरा कर्मनो सोधविवो १२ भेदे तपे करीने । एक जीव प्राणधारी प्रत्येकशरीरनो धरणहार । इहा साधारणशरीरी जीव न लेवो कार्म निर्जरा

त्तर मुक्तास्तत स्तदधिकाराद्वा तःपर मात्मधर्म्मान् एगाजीवाणमित्यादिना एगेचरित्ते इत्येतदन्तेन ग्रन्थेनाह ॥ एगाजीवाण अपरियाइत्ताविगुव्वणा ॥ एगाजीवाणति प्रतीतं अपरियाइत्तत्ति अपर्यादाय परितःसमन्ता दगृहीत्वा वैक्रियसमुद्घातेन बाह्यान् पुद्गलान् या विकुर्वणा भवधारणीयवैक्रियशरीर रचनालक्षणा स्वस्मिस्वस्मिन्नुत्पत्तिस्थाने जीवैः क्रियते साएकैव प्रत्येक मेकत्वा द्भवधारणीयस्येति सकलवैक्रियशरीरापेक्षयावा भवधारणीयस्यै कलक्षणत्वात् कथचिदिति या पुन र्वाह्यपुद्गलपर्यादानपूर्विका सोत्तरवैक्रियरचनलक्षणा साच चित्रा निप्रायपूर्वकत्व। द्वैक्रियलब्धिमत स्वाश्राविधशक्तिमत्वा च्चैकजीवस्था प्यनेकास्या दिति पर्यवसित मथ बाह्यपुद्गलोपादानएवो त्तरवैक्रिय भवतीति कुतोऽवसीयते येनेह सूत्रे अपरियाइत्ता इत्यनेन तद्विकुर्वणा व्यवच्छिद्यते इतिचे दुच्यते भगवतीवचना त्तथाहि देवेणभंतेमहड्ढिए जाव महाणुभागे बाहिरएपुग्गले अपरियाइत्ता पभूएगवन्नएगरूव विउव्वित्तए गो० नोइणमट्ठेस मट्ठे देवेणभते बाहिरए पोग्गले परियाइत्ता पभूहतापभूत्ति इहहिउत्तरवैक्रिय वाह्यपुद्गला दानाद्भवतीति शिवचितमिति ॥ एगेमणेत्ति ॥ मननमनः औ दारिकादिशरीरव्यापाराहृतमनोद्रव्यसमूहसाचिव्याज्जीवव्यापारो मनोयोग इतिभावः मन्यतेवा अनेनेति मनो मनोद्रव्यमात्र मेवेति तच्च सत्यादिभेदा दनेक मपि सञ्ज्ञिना वा असख्यातभेद मप्येकम्मननलक्षणत्वेन सर्वमनसा मेकत्वादिति ॥ एगावयीत्ति॥ वचनम्वाक् औदारिकवैक्रियाहारकशरीरव्यापारा हृतवाग्द्रव्यसमूहसाचिव्याज्जीवव्यापारो वाग्योग इतिभावः इयच सत्यादिभेदादनेका प्येकैव सर्ववाचा वचनसासान्येनातिभावादिति। एगेकायवायामेत्ति

॥ एगाजीवाणं अपरिआइत्ताविगुव्वणा एगेमणे एगावयी एगेकायवायामे ॥

जीवनें विकुर्वणा एकछे। देवता आश्री बाह्यपुद्गल ग्रह्या विना देवता भवधारणीय बांधे ते प्रत्येकें एकज बांधे घणांनथी । मनरूपयोग एकछे । वचन यो

॥ २५ ॥

कायतद्व्रतिक्रय: शरीर न्तस्य व्यायामो व्यापार: कायव्यायाम: औदारिकादिशरीरयुक्तस्यात्मनो वीर्यपरिणाविशेष इतिभाव:स पुन रौदारिकादिभे
देन सप्तप्रकारोपि जीवानन्तत्वेनानन्तभेदोपि वा एकएव कायव्यायामसामान्यादिति यच्चे कस्येवादा मन: प्रभृतीना मेकत्व न्तत् सूत्रएव विशेषेण वदाति
एगेमणेदेवासुरे ॥ त्यादिनेति सामान्याश्रय मेवेहैकत्वं व्याख्यात मिति ॥ उप्पत्ति ॥ प्राक्षतत्वादुत्पाद: सचैकसमये एकपर्यायापेक्षया नहि तस्ययुगपदुत्पा
दद्वयादि रस्ति अनपेक्षिततद्विशेषकपदार्थतया चैको सावेति ॥ वियइत्ति ॥ विगति र्विगत: साचैका उत्पादवदिति विकृति र्वितति रित्यादिव्याख्यांत
रमप्युचित मायोज्य मस्माभिस्सू त्पादसूत्रानुगुणतोव्याख्यात मिति ॥ वियच्चत्ति॥ विगतै: प्रागुक्तत्वा दिहविगतस्य विगमवतो जीवस्य मृतस्येत्यर्थ: अर्चा
शरीर म्विगतार्चा प्राकृतत्वादिति विचर्चाजा विशिष्टोपपत्ति पद्धति र्विशिष्टभूषावा साचैका सामान्यादिति ॥ गइत्ति॥ मरणानतरं मनुजत्वादे: सकाशा
न्नारकत्वादौजीवस्य गमन ङ्गति: साचेवादेकस्यैकैव नटज्वादिका नरकागत्यादिका वा पुद्गलस्यवा स्थितिवैलक्षण्यमात्रतया चैकातयैकस्वरूपा सर्वजीवपुद्गलाना
मिति ॥ आगइत्ति ॥ आगमनमागति र्नारकत्वादेरेव प्रतिनिवृत्ति: तदेकत्व गतेरिवेति ॥ चयणेत्ति ॥ च्युतिश्च्यवन वैमानिकज्योतिष्काणा म्मरण न्तदेक

## एगाउप्पा एगावियती एगावियच्चा एगागती एगाआगती एगेचयणे एगेउववाए एगातक्का एगासन्ना ए

ग एकछे। कायानो व्यापार एकछे यद्यपि औदारिकादि ७ भेदछे पणि सर्वते काया शब्दमा आव्या। उपजवो एकछे एक समये एकज। विगति ते वि
नाश एकछे। जीवनो शरीर एकछे पर भवें उपजतां वैक्रिय तथा औदारिक। गती एकछे मनुष्यमाथी नरकादिके जावानो। एक आगतिछे नरका

मेकजीवापेक्षया नानाजीवापेक्षयाच पूर्ववदिति ॥ उववाएत्ति ॥ उपपतनमुपपातो देवनारकाणां जन्म सचैकं च्यवनवदिति ॥ तक्कत्ति ॥ तर्कणतर्कोवि मर्शः अपायात्पूर्व्वा ईहायाउत्तराःप्रायः शिरःकण्डूयनादयः पुरुषधर्म्मा इहघटन्तइति सम्प्रत्ययरूपा इहचैकत्वन्तु प्राग्विवेति ॥ सन्नत्ति ॥ सञ्ज्ञानसञ्ज्ञा व्यञ्जनाव ग्रहोत्तरकालभवो मतिविशेषः आहारभयाद्युपाधिका वा ऽचेतनासंज्ञा ॥ अभिधान ग्वा सन्नेति ॥ मन्नत्ति ॥ प्राकृतत्वा न्मननम्मतिः कथचिदर्थपरिच्छित्तावपि सूक्ष्मधर्म्मालोचनरूपा बुद्धिरितियावत् आलोचनमितिकेचित् अथवा मन्नामन्नियव्व अभ्युपगमइत्यर्थः सूत्रद्वयेपि सामान्यत एकत्वमिति ॥ एगाविन्नुत्ति ॥ विद्वान् विज्ञोवा तुल्यबोधत्वादेकइति स्त्रीलिंगत्वचप्राकृतत्वात् उत्पाद उप्पावत् लुपभावप्रत्ययत्वाद्वा एकाविद्वत्ता विज्ञताचेत्यर्थः ॥ वेयणत्ति ॥ प्राग्वेदनासामान्यकर्मानुभवलक्षणोक्ता इहतुपीडालक्षणैव साचसामान्यत एकैवेति ॥ अस्याएव कारणविशेषनिरूपणायाह ॥ छेयणेत्ति ॥ छेदन शरी रस्यान्यस्यवाखड्गादिनेति ॥ भेयणेत्ति ॥ भेदन कुंतादिना अथवा छेदन कर्म्मणः स्थितिघातः भेदनंतु रसघातः इत्येकताच विशेषाविवक्षणादिति वेदनादि भ्यश्च मरण मत स्तद्विशेषमाह ॥ एगेमरणेत्यादि ॥ मृतिर्मरण अंतेभव मंतिम चरम तच्च तच्छरीरचे त्यंतिमशरीर तत्र भवाअंतिमशारीरिका उत्तरपद वृद्धि स्तद्वा तेषामस्तीति अंतिमशारीरिका दीर्घत्वंच प्राकृतशैल्या तेषा चरमदेहानां मरणैकताच सिद्धत्वे पुन मरणाभावादिति ॥ अंतिमशरीरस्य

**गामन्ना एगाविन्नू एगावेयणा एगेछेयणे एगेभेयणे एगेमरणे अंतिमसारीरियाणं एगेसंसुद्धे अहाभूते पत्ते**

दिकमांथी मनुष्यमां आविवी । एक च्यवनछे देवतानो मरण । एक उपपातछे देवता नारकीनो जन्म। एक वितर्कछे। एक सञ्ज्ञाछे । एक मति छे सूक्ष्मअर्थ विचारवानी बुद्धि। एक पंडित पणोछे। १ पीडा प्रमुख वेदनाछे। १ छेदनछे खड्गादिके शरीरनो। १ भेदनछे भालादिके करी। मरण एकछे

स्नातकोभूत्वा म्रियते ऽत एतमाह ॥ एगेसंसुद्धेइत्यादि ॥ एकःसंशुद्धो ऽशयलचरणो ऽकषायत्वात् यथाभूत स्तात्विकः पात्रमिवपात्र मतिशयवत् ज्ञाना दिगुणरत्नानांप्राप्तो वा गुणप्रकर्षमितिगम्यते ॥ एगेदुक्खे ॥ एक मेयांतिमभवग्रहणसम्भवं दुःखं यस्यस एकदुःख एगेअक्खेत्ति पाठांतरे त्वेकधैवा ख्या संशुद्धा दि व्यपदेशो यस्य नत्वसंशुद्ध संशुद्धासंशुद्धइत्यादिकोपि व्यपदेशांतरनिमित्तस्य कषायादे रभावादिति समवत्वेकधाख्य एकधा ऽर्चोया जीवो यस्यस तथेति जीवानां प्राणिना मेकभूत एकद्रवात्मोपम इत्यर्थः एकांतहितप्रवृत्तित्वा देकत्व चास्य बहूनामपि समस्वभावत्वा दिति अथवा ॥ पत्तेइत्यादिसूत्रान्तरं॥ उक्तरूपसंशुद्धादन्येषांस्वरूपप्रतिपादनापर तत्र प्राकृतत्वात् प्रत्येक मेक दुःख प्रत्येकैकदुःख जीवानां स्वकृतकर्म्मफल भोगित्वात् किंभूतं तदित्याह ए कभूत मनन्यतयाव्यवस्थित प्राणिषु नसांख्यानामिव बाह्य मिति ॥ दुःखपुन रधर्माभिनिवेशा दिति तत्स्वरूपमाह ॥ एगाअहमेत्यादि ॥ धारयति दुर्ग तौ प्रपततो जीवान् धारयतिसुगतौ वा तान्स्थापयतीति धर्म्मः उक्तंच दुर्गतिप्रसृतान्जन्तून् यस्माधारयतेततः धत्तेचैतान् शुभेस्थाने तस्माद्धर्म्मइतिस्मृ तः ॥ १ ॥ सचश्रुतचारित्रलक्षण स्तत्प्रतिपक्ष स्त्वधर्म्मस्तद्विषया प्रतिमा प्रतिज्ञा अधर्मप्रधानंशरीरंवा अधर्मप्रतिमा साचैकासर्वस्याः परिक्लेशकारणत यैकरूपत्वा दतएवाह ॥ जसेइत्यादि ॥ यत् यस्मात् से तस्याः स्वाम्यात्मा जीवो अथवा सेति सो ऽधर्म्मप्रतिमावाना त्मा परिक्लिश्यते रोगादिभि र्बाध्यते

## एगेदुक्खेजीवाणं एगेभूते एगाअहम्मपडिमा जंसेआयापरिकिलेसति एगाधम्मपडिमा जंसेआयापज्जवज्जाए

छेहला शरीरनो मुंकवो तेभवेजमोक्ष । १ शुद्ध चारित्रियो तत्वनो जाण केवली तीर्थंकर । तेहीज उत्तम पात्र । एक दुःखछे छेहला शरीरी जीवने तेही भवे मोक्ष जाय तेमाटे । सर्वजीवनो आत्मरूपस्वभाव १ छे । पापरूप अधर्मनो करणहार शरीर १ छे । जे अधर्मथी आत्मा क्लेश पावे दुःख भोगे ।

सक्लिश्यत इत्यर्थः जंसीतिपाठान्तरम्वा ततश्च प्राकृतत्वेन लिङ्गव्यत्ययात् यस्या मधर्म्मप्रतिमायां सत्यात्मा परिक्लिश्यते सा एकैवेति एतद्विपर्ययमाह एगाधम्मेत्यादि ॥ प्राग्व श्चवर म्पर्यवा ज्ञानादिविशेषा जाता यस्यस पर्यवजाती भवतीतिशेषः विशुद्ध्यतीत्यर्थः आहिताग्न्यादित्वाच्च जातशब्दस्योत्तरपद त्वमिति अथवा पर्यवान् पर्यवेषु वा यातः प्राप्तः पर्यवयाती ऽथवा पर्यवः परिरचा परिज्ञान म्वा शेषन्तथैवेति धर्म्माधर्म्मप्रतिमेच योगत्रयाद्भवत इति त त्स्वरूपमाह ॥ एगेमणेइत्यादिसूत्रत्रय ॥ तत्र मनइति मनोयोगः तच्च यस्मिन्यस्मिन्समये विचार्यते तस्मिन् २ समये कालविशेषे एकमेव वीप्सानिर्द्देशेन न क्वचनापिसमये तत्‌द्व्यादिसख्यसम्भवतीत्याह एकत्वश्च तस्यै कोपयोगत्वात् जोवानां स्यादेतत् नैकोपयोगो जीवानां युगपच्छीतोष्णस्पर्शविषयसवेदनद्वयद र्शना त्तथाविधभिन्नविषयोपयोगपुरुषद्वयवत् अत्रोच्यते यदिद शीतोष्णोपयोगद्वय तत्स्वरूपेण भिन्नकालमपि समयमनसो रतिसूक्ष्मतया युगपदिव प्रती यते नपुन स्तद्युगपदेवेति आहच समयातिसुहुमयाओ मन्नसिजुगवंचभिन्नकालपि उप्पलदलसयवेह व्वजहवनमलाइचक्कव्वत्ति ॥ १ ॥ यदिपुन रेकत्वो पयुक्त मनो ऽर्थान्तरमपि सवेदयति तदा कि मन्यत्र गतचेताः पुरोवस्थितं हस्तिनमपि नविषयीकरोतीति आहच अन्नहणिउत्तमन्न विणिओगलहद्दज इमणोतेण हत्थिपिठियपुरओ किमन्नचित्तोनलक्खेइ ॥ १ ॥ इह बहुवक्तव्यमस्ति तत्तुस्थानान्तरादवसेयमिति अथवा सत्यासत्योभयस्वभावानुभयरूपा

## एगेमणे देवासुरमणुआणं तंसितंसिसमयंसि एगावयी देवासुरमणुआणं तंसितंसिसमयंसि एगेकायववायामे ॥

धर्मनो शरीर १ छे जेणें शरीरे धर्म करिये ते। जेणे धर्मे आत्मा ज्ञानादिगुण पामें सुखी थाय। १ मननो योगछे शुभ तथा अशुभ। देवता विमानवा सी असुर भवनपती व्यंतर ने मनुष्यने होय। तेणे तेणे समये। १ वचनयोग देवता असुर मनुष्यने। १ समये बे भाषान बोलाये १ भाषा बोलाये। तेणे ॥

णां चतुर्णां मनोयोगाना मन्यतरएव भव त्येकदा ह्यादीना विरोधेनासभवा दिति कोपामित्याह ॥ देवासुरमणुयाणति ॥ तत्र दीव्यतीति देवा वैमा
निकज्योतिष्का स्तेच न सुराअसुरा भवनपतिव्यंतरा स्तेच मनोर्जाता मनुजा मनुष्या स्तेच देवासुरमनुजा स्तेषां तथा ॥ वागिति ॥ वाग्योगः सचैषा मेक
दा एकएव तथाविधमनोयोगपूर्व्वकत्वा त्तथाविधवाग्योगस्य सत्यादीना मन्यतरभावा द्वा वच्यतिच छहिठाणेहिंणत्थि जीवाण इड्ढीइवाजावपरिक्कमेइवा
त जीवंवाअजीव करणयाए अजीववाजीवकरणयाए एग समएण दोभासाओ भासत्तिएत्ति तथा कायव्यायामः काययोग' सचैपा मेकदा एकएव स
प्तानां काययोगानामेकदा एकतरस्यैव भावात् ननु यदाहारकप्रयोक्ता भवति तदौ दारिकस्या वस्थितस्य श्रूयमाणत्वात् कथ मेकदा न काययोगद्वय मि
त्यत्रोच्यते सतो प्यौदारिकस्य व्यायामाभावा दाहारकस्यैव च तत्र व्याप्रियमाणत्वा दप्यौदारिक मपिव्याप्रियते तर्हिमिश्रयोगता भविष्यति केवलि
समुद्घाते सप्तमषष्ठद्वितीयसमये ष्वौदारिकमिश्रव त्तथा चाहारकप्रयोक्ता नलभ्येतैवच सप्तविधकाययोगप्रतिपादन मनर्थक स्या दित्येकएव कायव्या
याम इत्येव कृतवैक्रियशरीरस्य चक्रवर्त्यादे रप्यौदारिक निर्व्यापारमेव व्यापारवत्वाच्चे दुभयस्य व्यापारवत्वे केवलिसमुद्घातव न्मिश्रयोगते त्येव मप्येकयो
गत्व मव्याहत मेवेति तथाकाययोगस्या प्यौदारिकतया वैक्रियतयाच क्रमेण व्याप्रियमाणत्वे आशुवृत्तितया मनोयोगव द्युगपद्यस्याति: स्यात्तदाको
दोष इति एवच काययोगैकत्वे सत्यौदारिकादिकाययोगाहृतमनोद्रव्यवाग्द्रव्यसाचिव्यजातजीवव्यापाररूपत्वा न्मनोयोग वाग्योगयो रेककाययोगपूर्वकत
यापि प्रागुक्तमेकत्व मवसेयमिति अथचेदमेव वचनमात्रप्रमाण माज्ञाग्राह्यत्वादस्य यतः आणागभ्भोअत्थो आणाएचेवसोकहेयव्वो दिट्ठतादिट्ठतिय क
हणविहिविराहणाइयरत्ति ॥ १ ॥ दृष्टात दार्ष्टांतिकोऽर्थइत्यर्थः ननुसामान्याश्रयैकत्वे नैव सूत्रगमक भविष्यतीति किमनेन विशेषव्याख्यानेनेति उ
तेणे समये कायानो व्यापार १ छे देवता असुर मनुष्यने। तेणे तेणेसमये देवता असुर मनुष्यने उत्थान चेष्टा विशेष कर्म भ्रमणादि क्रिया बल शरीर सा

च्यते नैव सामान्यैकत्वे ऽस्य पूर्वसूत्रैरेवा भिहितत्वा दस्य पुनरुक्तत्वप्रसंगा द्देवादिग्रहणं समयग्रहणयोश्च वैयर्थ्यप्रसंगान्नेति इहच देवादिग्रहणं विशिष्टवै
क्रियलब्धिसंपन्नतयैषा मनेकशरीररचने सत्येकदा मनोयोगादीना मनेकत्वं शरीरवद्भविष्यतीति प्रतिपत्तिनिरासार्थं ननु तिर्यग्नारकाणा व्यवच्छेदार्थं
ननु तिर्यग्नारकाअपि वैक्रियलब्धिमत स्तेषामपि विक्रियाया शरीरानेकत्वेन मनः प्रभृतीना मनेकत्वप्रतिपत्तिः संभाव्यत एवेति तद्ग्रहणमपि न्याय्य
मिति सत्य किंतु देवादीना विशिष्टतरलब्धितया शरीराणा मल्पतानेकतेति तद्ग्रहण तथा प्रधानग्रहणे इतरग्रहण भवतीति न्यायाददोष नारकादिभ्यश्च
देवादीना प्रधानत्व प्रतीत मेवेति एतेषांच मनः प्रभृतीना यथाप्राधान्यकृत क्रमः प्रधानत्वंच बह्वल्पाल्पतरकर्म्मक्षयोपशमप्रभवत्वाभकृत मिति ॥ कायव्या
यामस्यैव भेदाना मेकतामाह ॥ एगेउट्ठाणेइत्यादि ॥ उत्थानच चेष्टाविशेषः कर्मच भ्रमणादि क्रिया बलच शरीरसामर्थ्य वीर्यच जीवप्रभव पुरुषकारश्चा
भिमानविशेषः पराक्रमश्च पुरुषकारएव निष्पादितस्वविषयइतिविग्रहे द्वंद्वैकवद्भाव एतेच वीर्यान्तरायक्षयक्षयोपशमसमनुगाजीवपरिणामविशेषा एतेषु प्रत्ये
कशब्दो योजनीयो वीर्यान्तरायक्षयक्षयोपशमवैचित्र्यत प्रत्येक जघन्यादिभेदै रनेकत्वे प्येषा मेकजीवस्यैकदा क्षयक्षयोपशमसात्राया एकविधत्वा देक
एव जघन्यादि रेतद्विशेषो भवति कारणमात्राधीनत्वा त्कार्यमात्राया इति सूत्रभावार्थः शेषस्माग्वदिति ॥ पराक्रमादेव ज्ञानादिमोक्षमार्गो ऽवाप्यते यत
आह अब्भुट्ठाणेविणए परक्कमेसाहुसेवणाएय सम्मद्दंसणलंभो विरयाविरईएविरईएत्ति ॥ १ ॥ अतो ज्ञानादीना निरूपणार्थ माह । एगेनाणेइत्यादि । अ

देवासुरमणुयाण तंसि तंसिसमयंसि एगेउट्ठाणकम्मबल वीरियपुरिसक्कारपरक्कमे देवासुरमणुयाणं तंसितंसि

म र्थ्य वीर्य जीवप्रभव पुरुषात्कार अहं कार विशेष पराक्रम अहंकारथी उपनो स्वविषय एतला १ छे एकें समये थाय । १ ज्ञानछे केवल ज्ञानावरणना

॥

थवा धर्मप्रतिमाप्रागुदिता साच ज्ञानादिस्वभावेति ज्ञानादीन्निरूपयन्नाह । एगेनाणेइत्यादि। सूत्रत्रयं ज्ञायन्ते परिच्छिद्यन्ते अर्था अनेनास्मिन्नस्माद्वेति ज्ञानं ज्ञानदर्शनावरणयोः क्षयः क्षयोपशमोवा ज्ञाति र्वा ज्ञान मावरणद्वयक्षयाद्याविर्भूत आत्मपर्यायविशेषः सामान्यविशेषात्मके वस्तुनि विशेषांशग्रहणप्रवणः सामान्यांशग्राहकश्च ज्ञानपञ्चकाज्ञानत्रयदर्शनचतुष्टयरूप स्तच्चानेकमप्यत्रबोधसामान्यादेक मुपयोगापेक्षया वा तथाहि लब्धितो बहूना म्बोधविशेषाणा मेकदास्य भवे प्युपयोगत एकएव सम्भव त्येकोपयोगत्वात् जीवानामिति ननु दर्शनस्य ज्ञानव्यपदेश्यत्वमयुक्त म्विषयभेदा दुक्तञ्च जंसामन्नगहणं दंसणमेयंविसेसियंणा णंति अत्रोच्यत ईहावग्रहौहि दर्शनं सामान्यग्राहकत्वा दपायधारणेच ज्ञान म्विशेषग्राहकत्वा दथवो भयमपि ज्ञानग्रहणेन गृहीत मागमे आभिणिबो हियनाणे अट्ठावीसइवतिपयडीओत्ति वचना त्तस्मा दवबोधसामान्या द्दर्शनस्यापि ज्ञानव्यपदेश्यत्व मविरुद्ध मिति ननु दर्शनपृथगेवोपात्तमुत्तरसूत्रे तत्किमिह ज्ञानशब्देन दर्शनमपि व्यपदिष्ट मित्यत्रोच्यते तत्रहि दर्शनं श्रद्धान विवक्षित ज्ञानादित्रयस्य सम्यक्शब्दलाञ्छितत्वे सति मोक्षमार्गत्वेन विवक्षितत्वात् मोक्षमार्गभूतं चैतत्त्वश्रद्धानपर्यायेणैव दर्शनेनसहेति । दंसणेत्ति । दृश्यन्ते श्रद्धीयते पदार्था अनेनास्मादस्मिन्वेतिदर्शनं दर्शनमोहनीयस्य क्षयः क्षयोपशमो वा दृष्टिर्वा दर्शनं न्दर्शनमोहनीयक्षयाद्याविर्भूत स्तत्वश्रद्धानरूप आत्मपरिणाम स्तच्चोपाधिभेदा दनेकविधमपि श्रद्धानसाम्यादेक एकजीवस्य चैकदा एकस्यैव भावादिति नन्ववबोधसामान्यात् ज्ञानसम्यक्तयोः कः प्रतिविशेष उच्यते रुचिः सम्यक्तं रुचिकारणन्तु ज्ञानं यथोक्तं नाणमवायधिईयो द ॥

॥ समयंसि एगेनाणे एगेदंसणे ॥

अर्थ ।सामान्य आणि ते दर्शन १ छे केवल दर्शनावरणनाक्षयथी ॥

सणमिउजह्योगहिहाओ तहतत्तरुईसम्मं रीतिज्जइजेणतंनाणं॥ १ ॥ चरित्तेत्ति॥ चर्य्यतेमुमुक्षुभि रासेव्यते तदिति चर्य्यतेवा गम्यते अनेन निर्वृत्ताविति चारित्रं अथवा चयस्य कर्म्मणा रिक्तीकरणा च्चरित्र निरुक्तन्यायाद् दिति चारित्रमोहनीयक्षयाद्याविर्भूत आत्मनो विरतिरूपः परिणाम इति तदेक वक्ष्यमाणाना सामायिकादितद्भेदाना विरतिसामान्यातर्भावा देकस्य चैकदा भावादेति एतेषाञ्च ज्ञानादीना मयमेवक्रमो यतो नाज्ञात श्रद्धीयते नाश्रद्धित सम्यगनुष्ठी यत इति ज्ञानादीनिह्युत्पत्तिविगतिस्थितिमति स्थितिश्च समयादिकेति समयप्ररूपयन्नाह । एगेसमये । समयः परमनिकृष्टकाल उत्पलपत्रशतव्यतिभेदद्द ष्टान्ताज्जरत्पटशाटिकापाटनदृष्टान्ताद्वा समयप्रसिद्धा दवबोद्धव्यः सचैकएव वर्त्तमानस्वरूपो तीतानागतयो विंनष्टानुत्पन्नत्वेना भावात् अथवा सावेकः स्वरूपेण निरंशत्वा दिति निरंशवस्त्वधिकारा देवेद सूत्रद्वयमाह ॥ एगेपएसे ॥ एगेपरमाणू ॥ प्रकृष्टो निरंशो धर्म्माधर्म्माकाशजीवानां देशो ऽवयवविशे षः प्रदेशः सचैकः स्वरूपतः सद्वितीयत्वादौ देशव्यपदेशत्वेन प्रदेशत्वाभावप्रसङ्गादिति ॥ परमाणुत्ति ॥ परमश्चासा वात्यन्तिको ऽणुश्च सूक्ष्मः परमाणुः द्व्यणुकादिस्कन्धानां कारणभूतः आहच कारणमेवतदन्त्य सूक्ष्मोनित्यश्चभवतिपरमाणुः एकरसवर्णगन्धो द्विस्पर्शःकार्यलिङ्गश्चेति ॥ १ ॥ सच स्वरूपतः एकएवा न्यथा परमाणुरेवासौ नस्यादिति अथवा समयादीना मप्येकमनन्ताना मपि तुल्यरूपापेक्षयैकत्वमिति ॥ यथा परमाणो स्तथाविधैकत्वपरिणा

## ॥ एगेचरित्ते एगेसमए एगेपएसे एगेपरमाणु ॥

सामान्यवोले १ चारित्रछे सर्वविरति देशविरति रूप । समय कालविशेष एक एहमा वीजोभेदनथो समयथी सूक्ष्म कालमान नथी । धर्मास्तिकायादि कनो अवयवते प्रदेश एकछे तेनो बीजोभाग नथाय । १ परमाणु पुद्गल १ नां बे भाग न थाय ॥ ॥ ॥

मविशेषा देकत्व भवति ततएव अनन्ताणुमयस्कंधस्यापि स्या दितिदर्शयन् सकलबादरस्कन्धप्रधानभूत मीषत्प्राग्भाराभिधानपृथ्वीस्कंधं प्ररूपयन्नाह ॥ ॥ ८
एगासिद्धी ॥ सिद्ध्यन्ति कृतार्था भवन्ति यस्यांसा सिद्धिःसाच यद्यपि लोकाग्रं यतप्राह इहबुदींचइत्ताण तत्थगंतूणसिज्झइत्ति तथापि तत् प्रत्यासत्त्येषत्
प्राग्भारापि तथाव्यपदिश्यते आहच बारसहिंजोयणेहिं सिद्धीसव्वट्ठसिद्धाओत्ति यद्दिवा लोकाग्रमेव सिद्धिः स्या त्तदा कथमेतदनन्तरमुक्तं निम्मलदग
रयवन्ना तुसारगोक्खीरहारसरिवन्ने त्यादि तत्स्वरूपवर्णनं घटते लोकाग्रस्या मूर्त्तत्वादिति तस्मा दीषत्प्राग्भारासिद्धि रिहोच्यते साचैका द्रव्यार्थतया पञ्च
चत्वारिंश द्योजनलक्षप्रमाणस्कन्धस्यैकपरिमाणत्वा त्पर्यायार्थतयात्वनन्ता अथवा कृतकृत्यत्वं लोकाग्रमणिमादिकावा सिद्धिरेकत्वञ्च सामान्यत इति ॥
सिद्धे रनतर सिद्धिमतमाह ॥ एगेसिद्धे ॥ सिद्धातिस्म कृतकृत्योभवेत् सेधतिवा स्माऽगच्छ दपुनरावृत्या लोकाग्र मितिसिद्ध सितं वा बद्धंकर्म्म ध्मात दग्ध य
स्य स निरुक्तात्सिद्धः कर्म्मप्रपचनिर्मुक्तः सचैको द्रव्यार्थतया पर्यायार्थत स्त्वनंतपर्याय इति अथवा सिद्धाना मनंतत्वेपि तत्कालगता देकत्वं अथवा कर्म्मशिल्प
विद्यामंत्रयोगागमार्थयात्राबुद्धितपः कर्म्मक्षयभेदेना नेकत्वे प्यस्यैकत्व सिद्धशब्दाभिधेयत्वसाम्यादिति ॥ कर्म्मक्षयसिद्धस्यच परिनिर्वाणधर्म्मोभवतीति तदा
॥ एगेपरिनिव्वाणे ॥ परिसमता न्निर्वातीति निर्वाण सकलकर्म्मकृतविकारनिराकरणतः स्वस्थीभवन परिनिर्वाणं तदेकमेकदा तस्य संभवे पुनरभावा दि
ति ॥ परिनिर्वाणधर्म्मयोगात् सएवकर्म्मक्षयसिद्धः परिनिर्वृत उच्यते इति तद्दर्शनायाह ॥ एगेपरिनिव्वुए ॥ परिनिर्वृतः सर्वतः शारीरमानसास्वास्थ्यविरहित

## ॥ एगासिद्धी एगेसिद्धे एगेपरिनिव्वाणे एगेपरिनिव्वुए ॥

१ सिद्धशिला ४५ लाखयोजन प्रमाणे छे । एक सिद्धछे सहुसरीखा माटे । सकल दुःखनाक्षयथी सुखनो थावो वली दुःख न आवे तेमाटे १ छे

इतिभावः तदेकत्वं सिद्धस्येव भावनीयमिति ॥ तदेतावता ग्रंथेनैते प्रायो जीवधर्म्माएकतयानिरूपिताः इदानीं जीवोपग्राहकत्वा त्पुद्गलानां तल्लक्षणा जीवधर्म्मा ॥ एगेसद्देइत्यादिना जाव लुक्खे इत्येतदतेन ग्रन्थेनैकतयैव दृश्यंते ॥ पुद्गलानांतु सत्ता केषांचिदनुमानतो ऽवसीयते घटादिकार्योपलब्धेः केषांचि त्सांव्यवहारिकप्रत्यक्षत इति तत्र शब्दादिसूत्राणि सुगमानि नवरं शब्द्यते अभिधीयतेनेनेति शब्दो ध्वनिः श्रोत्रेंद्रिय विषयः । रूप्यते अवलोक्यत इति रूप माकार श्चक्षुर्विषयः । घ्रायते सिंघ्यते इति गंधो घ्राण विषयः । रस्यते आस्वाद्यत इति रसः रसनेंद्रियविषयः स्पृश्यते छुप्यत इतिस्पर्शः स्पर्शनकरणविष यः । शब्दादीनां चैकत्व सामान्यतः सजातीयविजातीयव्यावृत्तरूपापेक्षयावा भावनीय शब्दभेदावाह सुब्भिसद्देत्ति ॥ शुभशब्दो मनोज्ञइत्यर्थः ॥ दुब्भि त्ति॥ अशुभः मनोज्ञो यो न भवतोति एवच शब्दान्त र मन्तान्तर्भूत मवसेय मेव रूपव्याख्यानेपि सुरूपादयश्चतुर्द्दश शुक्लान्ता रूपभेदा स्तत्र सुरूप मनोज्ञरूप मितर द्दूरूपमिति दीर्घमायत ह्रस्वन्तदितर वृत्तादयः पचस्त्वथसस्थानभेदा स्तत्र वृत्तसस्थानमोदकवत् तच्चघनप्रतरभेदाद्विधा पुनः प्रत्येक समविषमप्रदेशावगाढ मितिचतुर्द्धा एवशेषाण्यपि ॥ तसेत्ति॥ तिस्रो स्रयः कोटयो यस्मिं स्तत्'त्र्यस्र त्रिकोणं ॥ चउरंसेत्ति ॥ चतस्रो स्रयो यस्य तत्तथा चतुष्कोण मित्यर्थः ॥ तथा

## एगेसद्दे एगेरूवे एगेगंधे एगेरसे एगेफासे एगेसुब्भिसद्दे एगेदुब्भिसद्दे एगेसुरूवे एगेदुरूवे एगेदीहे एगेरहस्से

सर्वं प्रकारे शारीर मानसीदुखनो रहित पणुं ते मोक्षएकछे । शब्द काननो विषयते एकछे । नेत्रनो विषयरूप शरीरनो आकार तेएकछे । नासिकानो पिषय गन्ध तेएकछे । जीभनो विषय रसते एकछे । फरस एकछे आठे भली नामथी कायानो विषय । एक भलो शब्द । एक खोटो कठिनशब्द । एक भ लोरूप । एक खोटोरूप । एक दीर्घ संस्थान । एक लघु सस्थान । एक वृत संस्थान लाडुवा जेहवो । एक त्रिखूणियो सिंघाडाने आकारें । एक चोखूणियो

पिहुलेत्ति॥ पृथुलंविस्तीर्णं मन्यत्र पुन रिहस्थाने आयत मभिधीयते तदेवचेहदीर्घंह्रस्वपृथुनशब्दे विंभज्योक्तमायतधर्म्मला देषां तचायत प्रतरघनश्रेणिभेदा त्रिधा पुन रेकैकं समविषमप्रदेश मिति षोढा यथा यतभेदयो रपि ह्रस्वदीर्घयो रादा वभिधान तद्वृत्तादिषु संस्थानेष्वायतस्यप्रायो वृत्तिदर्शनार्थं तथाहि दीर्घायत: स्तभो वृत्त स्तास्र चतुरस्र शैलादिभावनीय विचित्रत्वा द्वा सूत्रगतेरेवमुपन्यास इति ॥परिमंडलेत्ति॥ परिमंडलसंस्थान वलयाकार प्रतरघनभे दा द्विविध मिति रूपभेदो वर्णः सचकृष्णादि'पंचधा प्रतीतएव नवर हारिद्र: पीत' कपिशादयस्तु ससर्गजा इति नतेषामुपन्यास. ॥ गधोद्वेधा सुरभिश्च दुरभिश्च तत्र सौमुख्यकृत्सुरभि र्वैमुख्यकृद्दुरभि: साधारणपरिणामो ऽस्येष्टो दुर्यहइति ससर्गजत्वादेवनोक्त: रस. पञ्चधा तत्र श्लेष्मनाशकृत्तिक्त: १ ॥ वैशद्य च्छेदनकृत्कटुका: २ ॥ अन्नरुचिस्तम्भनकृ त्कषाय: ३ ॥ आश्रवणक्लेदनकृ दम्ल. ४ ॥ ह्लादनबृंहणकृ न्मधुर: ५ ॥ ससर्गजो लवणइति नोक्त इति स्पर्शोऽ ष्टविध स्तत्र कर्कश: काठिनो ऽनमनलक्षण: । १ । यावत्कारणात् मृद्वादन: षडन्ये तत्र मृदु: सन्नतिलक्षण: । २ । गुरु रधोगमनहेतु' । ३ । लघु. प्रायस्ति र्यगूर्ध्वगमनहेतु: । ४ । शीतो वैशद्यकृत् स्तम्भनस्वभाव: । ५ । उष्णो मार्दवपाककृत् । ६ । स्निग्ध सयोगेसति सयोगिना बन्धकारण । ७ । रूक्ष स्तथैवाबन्ध

एगेवट्टे एगेतंसे एगेचउरंसे एगेपिहुले एगेपरिमंडले एगेकिण्हे एगेनीले एगेलोहिए एगेहालिद्दे एगेसुक्कि ले एगेसुब्भिगंधे एगेदुब्भिगंधे एगेतित्ते एगेकडुए एगेकसाए एगेअंबिले एगेमहुरे एगेकक्खडे जावलुक्खे

एक पृथुल संस्थान विस्तारवंत । एक परिमंडल संस्थान वलयाकारे छाघनी चूडीसरीखो । एक कालोवर्ण । एक नीलोवर्ण । एक रातीवर्ण । एक पी लोवर्ण । एक सपेदवर्ण । अन्य जेवर्णान्तरछे तेससर्गजछे । एक सुगन्धछे । एक दुर्गन्धछे । १ तीखो रसछे । १ कटुक रसछे । १ कषाय रस छे । १ खाटो

कारण मिति। ८। उक्ता: पुद्गलधर्म्माणा मेकते दानींपुद्गलालिङ्गितजीव।प्रशस्तधर्माणा मष्टादशाना मपस्थानकाभिधानानां ॥ एगेपाणाइवाएइत्यादिना ग्रयेन दसणसत्ते इत्येतदंतेन तामेवाह ॥ तत्र प्राणा उच्छ्वासादय: तेषा मतिपातन मायवतासह वियोजन मागातिपातो हिंसेत्यर्थ. उक्तञ्च पञ्चेन्द्रि याणिचिविधवलञ्च। उच्छ्वासनि:श्वासमथान्यदायु: ॥ प्राणादशैतेभगवद्भिरुक्ता। स्तेषांवियोजीकरणन्तुहिंसेति ॥ १ ॥ सच प्राणातिपातो द्रव्यभावभेदा द्विविधो विनाशपरितापसङ्क्लेशभेदात् त्रिविधोवा आहच तप्पज्जायविणासो दुक्खुप्पाओयसकिलेसोय एसवहोजिणभणिओ वज्जेयव्वोपयत्तेणति ॥ १ ॥ अथवा मनोवाक्कायै: करणकारणानुमतिभेदा न्नवधा पुन: सक्रोधादिभेदात् षड्त्रिंशद्विधोवेति । १ । तथामृषा मिथ्या वदन वादो मृषावाद' सच द्रव्यभा वभेदाद्विधा अभूतोद्भावनादिभि श्चतुर्द्धा वा तथाहि अभूतोद्भावनं यथा सर्वगत' आत्मा। भूतनिह्नवो यथा नास्त्यात्मा। दस्त्वन्तरन्यासो यथा गौरयिसश्व श्वोयमिति। निन्दाच यथा कुष्टीत्वमसीति। २। तथा अदत्तस्य स्वामिजीवतीर्थंकरगुरुभि रवितोर्णस्या ननुज्ञातस्य सचित्ताचित्तमिश्रभेदस्य वस्तुन: आदा नं ग्रहण मदत्तादान चौर्यमित्यर्थ: तच्च विविधोपाधिवशा दनेकविध मिति। ३। तथा मिथुनस्य स्त्रीपुंसलक्षणस्य कर्म्म मैथुन मब्रह्म तन्मनोवाक्कायाना कृतकारितानुमतिभि रौदारिकवैक्रियशरीरविषयाभि रष्टादशधा विविधोपाधितो बहुविधतरञ्चेति। ४। तथा परिगृह्यते स्वीक्रियते इतिपरिग्रह: बा ह्याभ्यन्तरभेदा द्विधा तत्र बाह्यो धर्मसाधनव्यतिरेकेण धनधान्यादि रनेकधा आभ्यन्तरस्तु मिथ्यात्वाविरतिकषायप्रमादादि रनेकधा परिगृहण वा

॥ एगेपाणातिवाए जावएगेपरिग्गहे ॥

रसछे। १ मींठो रसछे। १ कठिन फरसछे । यावत् १ लूखो फरसछे। १ प्राणातिपात हिंसाछे। यावत् १ परिग्रहछे। १ क्रोध १ मान १ मायाकपट

परिग्रहो मूर्छेत्यर्थः । ५ । तथा क्रोधमानमायालोभाः कषायाःमोहनीयकर्मपुद्गलोदयसम्पाद्यजीवपरिणामा इति एतेचानंतानुबन्धादिभेदतो ऽसंख्याता ध्यवसायस्थानभेदतो वा बहुविधाः । ८ । तथा ॥ पेज्जत्ति॥ प्रियस्य भावः कर्मवा प्रेम तच्चानभिव्यक्तमायालोभलक्षणभेदस्वभाव मभिष्वङ्गमात्रमिति । १० । तथा ॥ दोसोत्ति ॥ द्वेषणद्वेषः दूषणवा दोषः सचानभिव्यक्तक्रोधमानलक्षणभेदस्वभावो ऽप्रीतिमात्रमिति । ११ । जावत्ति । कलहेऽभक्खाणे पेसुन्ने इत्यर्थः तत्र कलहो राटी । १२ । अभ्याख्यानं प्रकट मसद्दोषारोपणं । १३ । पैशून्य म्पिशुनकर्म प्रच्छन्नसदसद्दोषाविर्भावनं । १४ । परेषां परिवादः पर परिवादो विकत्थन मित्यर्थः । १५ । अरतिश्च तन्मोहनीयोदयज श्चित्तविकार उद्वेगलक्षणो रतिश्च तथाविधानन्दरूपा अ[illegible]तिरत्येकमेव विवक्षित यतः क्वचनविषये या रति स्तामेव विषयान्तरापेक्षया अरतिं व्यपदिशन्त्येव मरतिमेव रतिमित्यौपचारिक मेकत्व मनयो रस्तीति । १६ । तथामायामोसत्ति । मायाच निकृति र्मृषाच मिथ्यावादो माययावा सह मृषा मायामृषा प्राकृतत्वा न्मायामोसं दोषद्वययोगः इदञ्च मानमृषादिसंयोगदोषोपलक्षणं वेषान्त रकारणेन लोकप्रतारणमित्यन्ये प्रेमादीनिच बहुविधानि विषयभेदेना ध्यवसायस्थानभेदतो वा । १७ । मिथ्यादर्शनं विपर्यस्ता दृष्टि स्तदेवतोमरादिशल्य मिव शल्यं दुःखहेतुत्वात् मिथ्यादर्शनशल्यमिति मिथ्यादर्शनस्य पञ्चधा आभिग्राहिकानाभिग्राहिकाभिनिवेशिकानाभोगिकसांशयिकभेदा दुपाधिभेदतो

## एगेकोहे जावलोभे एगेपेज्जे एगेदोसे जावएगेपरपरिवाए एगाअरतिरति एगेमायामोसे एगेमिच्छादंसण

यावत् १ लोभछे। १ रागछे प्रेम । १ दोषछे द्वेष । यावत् शब्दे कलह अभ्याख्यान खोटो आल पैशून्य चाडी परपरिवाद निंदाछे। १ अरति ते उद्वेग १ १ रति ते आनन्द हर्षछे। १ मायामृषा जे कपट खोटो बोलवो। १ मिथ्यात्व दर्शन शल्यनी परें दुखदायी मिथ्यात्वछे ते १८ पापस्थानक । १ जीव

बहुतरभेदंचेति । १८ । एतेषाञ्च प्राणातिपातादीना मुक्तक्रमेणा नेकविधत्वेपि वधादिसाम्या देकत्व मवगन्तव्य मिति उक्ता न्यष्टादश पापस्थानानी दा नीं तद्विपचाणा मेव ॥ एगेपाणाइवायवेरमणेइत्यादिभि ॥ रष्टादशभि' सूत्रै रेकतामाह सुगमानिचैतानि नवर विरमण विरति स्तथा विवेकस्त्याग इति उक्तं सपुद्गलजीवद्रव्यधर्माणा मेकत्व मिदानीं कालस्य स्थितिरूपत्वेन तद्धर्मत्वात्तद्विशेषाणां ॥ एगाओसप्पिणीत्यादिना सुसमसुसमेत्येतदंतेनै तदेवा ह ॥ अथ कालएव कथ मवसीयत इतिचे दुच्यते बकुलचम्पकाशोकादिपुष्पप्रदानस्यनियमेन दर्शनात् नियामकश्च कालइति तत्र ॥ ओसप्पिणित्ति ॥ अवस र्पति हीयमानारकतया अवसर्प्पयतिवा ऽऽयुष्कशरीरादिभावान् हापयती त्यवसर्प्पिणी सागरोपमकोटाकोटी दशकप्रमाण: कालविशेष: सुष्टुसमा सुसमा अत्यन्तं सुसमा सुसमसुसमा अत्यन्तसुखस्वरूपा अस्याएव प्रथमारकइति एकत्वचावसर्प्पिण्या: स्वरूपेणै कत्वा देव सर्वत्र यावदिति सीमोपदर्शनार्थस्त तश्च सुसमसुसमेत्यादिसूत्र स्थानान्तरप्रसिद्धं तावदध्येय मिह ॥ जावदूसमदूसमेत्ति ॥ पदमित्यतिदेशो ऽयच सूत्रलाघवार्थं मित्येवं सर्वत्र यावदितिव्याख्येय

सव्वे एगेपाणाइवायवेरमणे जावपरिग्गहवेरमणे एगेकोहविवेगे जाव मि
च्छादसणसल्लविवेगे एगाउसप्पिणी एगासुसमसुसमा जावएगादुसमदुसमा

हिंसाथी विरमवो हिंसानो छांडिवो । यावत् मृषावाद अदत्तादान मैथुन परिग्रहनो छांडिवो। १ क्रोधनो त्याग यावत्एमज १८ बोल लेवा । मिथ्यात्व त्याग ते सम्यक्त । १ उत्सर्प्पिणी काल जिहा आऊखा प्रमुखभाव चढता होय । वली जिहां हीन भाव होय ते अवसर्पिणी काल । एकेकनामे १ सुसमसु समाकाल पहिलो आरो । १ दुसमदसमाकाल छठो आरो । १ नारकीनो वर्गणा । ७ नरकगत जीवने नारकी कहिये एतले नारकीनो समुदाय । एम १

मतिदेशलव्यानि च पदान्ये कमव्दोपपदान्येतानि॥ एगासुसमा एगासुसमदुसमा एगादुसमसुसमा एगादुसमा एगादुसमदुसमेति ॥ आसां स्वरूप शब्दा नुसारतो ज्ञेय प्रमाण पुन राद्यानां तिसृणा समाना क्रमेण सागरोपमकोटीकोट्य चतु स्त्रि द्वि सख्या चतुर्थ्यास्त्वेका द्विचत्वारिंशद्वर्षसहस्रोना अंत्ययोस्तु प्रत्येक वर्षसहस्राण्येकविंशतिरिति तथाऽवसर्पति वर्द्धते अरकापेक्षया उत्सर्पयति वा भावाना शुभादोन्वर्द्धयतोति उत्सर्पिणी सवसर्पिणीप्रमाणा सुष्टुसमा सुसमा दुःसमाः दुःखरूपा अत्यंतदुःसमादुसमदुसमायावत्करणा देगादुसमा एगादुसमसुसमा एगासुसमदुसमा एगासुसमसुसमेतिद्दृश्य एतत्प्रमाणच पूर्वो क्तमेव नवर विपर्यासादिति कृताजीवपुद्गलकालत्तणद्रव्यविविधधर्म्मविशेषाणा मेकत्वप्ररूपणा ऽधुना ससारिमुक्तजीवपुद्गलद्रव्यविशेषाणां नारकपरमा ण्वादीनां समुदायलक्षणवर्म्मस्य ॥ एगानेरइयाणवग्गणेत्यादिना एगा अजहन्नुक्कोसगुणलक्खाण पोग्गलाण वग्गणे ॥ त्येतदंतेन ग्रथेन तामेवाह । तत्र नेरइया णति निर्गत मविद्यमान अय मिष्टफल कर्म्म येभ्य स्ते निरया स्तेषु भवा नेरयिकाः क्लिष्टसत्वविशेषा स्तेच पृथ्वीप्रस्तटनरकावासस्थितिभव्यत्वादिभेदा द नेकविधा स्तेरा सर्वेषा वर्गणा वर्गः समुदाय स्तस्याश्चैकत्वं सर्वत्र नारकत्वादि पर्यायसाम्यादिति तथा असुराश्च ते नवयोवनतया कुमारा श्चेत्यसुरकुमारा स्तेषा मेकावर्गणेति ॥ चउवीसदंडउत्ति ॥ चतुर्विंशतिपदप्रतिबद्धो दण्डको वाक्यपद्धति श्चतुर्विंशतिदण्डकः सइह वाच्यइतिशेषः सचाय ॥ नेरइया १ असु राई १० पुढवाई ५ वेइन्द्रियादओचेव ४ नर १ वतर १ जोतिसिया १ वेमाणिय १ दंडओएव ॥ १ ॥ भवनपतयो दशधा असुरानागसुवन्ना विज्जूअग्गीय

## एगाणेरइयाणंवग्गणा एगाअसुरकुमाराणंवग्गणा चउवीसदंडए

असुरकुमार भवनपती १० नी वर्ग्गणा । एम पृथिवी पाणी ५ वेइन्द्रियादि ४ तिर्यंच मनुष्य व्यंतर ज्योतिषी वैमानिक एम २४ दंडकनी वर्गणा ।

द्दीवउदहीय दिसिपवणथणियनामा दसहाएएभवणवासित्ति ॥ १॥ एतदनुसारेण सूत्राणि वाच्यानि यावच्चतुर्विंशतितम॥ एगाविमाणियाणवग्गणत्ति एष सामान्यदण्डक: ननु नारकसत्तैवदुरुपपादा आस्ता तद्धर्मभूताया वर्गणाया एकत्व मनेकत्व चेति तथाहि नसन्ति नारका स्तत्साधकप्रमाणाभावात् व्योमकुसुमवत् अत्रोच्यते प्रमाणाभावादित्यसिद्धोहेतु स्तत्साधकानुमानसद्भावा त्तथाहि विद्यमानभोक्तृक प्रकृष्टपापकर्म्मफल कर्म्मफलत्वात् पुण्यकर्म्मफलवत् नच तिर्यग्नराएव प्रकृष्टपापफलभुज स्तस्यौदारिकशरीरवता वेदयितु मशक्यत्वा द्विशिष्टसुरजन्मनिवन्धनप्रकृष्टपुण्यफलवत् आहच पावफलस्स पगिठ्ठ स्सभोइणोकम्मओवसेसव्वं सतिधुवंतेभिमया नेरइयाअहमईहोज्जा ॥ १ ॥ अच्चत्थदुक्खियाजे तिरियनरानारगत्तितंभिमया तनजओसुरसोक्ख प्पगरिससरिसनतदुक्खति ॥ २ ॥ ओवसेसव्वत्ति ॥ यथा नारकेभ्यो अन्ये तिर्यग्नरा इत्यर्थ अथ सुराणामपि विवादास्पदीभूतत्वा द्विशिष्टस्रजन्मनिवन्धनप्रकृष्टपुण्यफलत्व दित्यसिद्धोदृष्टान्त: अत्रोच्यते देवइति सार्थकम्पद व्युत्पत्तिम च्छुद्धपदत्वात् घटाभिधानव दिति तत: सन्ति देवा इतिप्रत्येतव्य मथ मनुष्ये ए गुणर्द्धि सम्पन्नेना र्थवद्भविष्यति देवपदमिति न विवक्षितदेवसिद्धि रिति अत्रोच्यते यदिद नरविशेषे देवत्व न्तदौपचारिक मुपचारश्चा र्थसिद्धौ सत्या भवति यथा निरुपचरितसिंहसद्भावे माणवके सिंहोपचार इति आहच देवत्तिसत्थयमिद सुद्धत्तणओघडाभिहाणच अहवमईमणुओच्चिय देवोगुणरिद्धिसपन्नो ॥ १ ॥ तन्नजओतच्चत्थे सिद्धेउवयारओमयासिद्धी तच्चत्थसीहसिद्धे माणवसीहोवयारोव्वत्ति ॥ २ ॥ अपिच देवेसुनसदेहो जुत्तोजंजोइसास

## जावएगावेमाणियाणंवग्गणा एगाभवसिद्धियाणवग्गणा एगाअभवसिद्धियाणंवग्गणा एगाभवसिद्धियाणंणे

वैमानिक देवतालगे नामथी एकेक बोलजाणिवो । एकनामें घणानो समुदाय ते वर्गणा । एक भव्यजीवनी वर्गणाछे । जे अनंतभवे पणिमोक्षजास्ये

पच्चक्खं दीसंतितक्कयाचिय उववायाणुग्गहोजगओ ॥ १ ॥ आलयमेत्तंचमई पुरंचतव्वासिणीतहविसिद्धा जेतेदेवत्तिमया नयनिलयानिच्चपडिसुन्ना ॥२॥
कोजाणइ्वकिमेय तिह्योज्जनिस्संसयाविमाणाइं रयणमयनभोगमणा दिहजहविज्जाहराईणं ॥ १ ॥ तेषा मसुरादिविशेषः पुन राप्तवचना दवसेयइति
अथपृथिव्यप्तेजोवायुवनस्पतिकायिकाः कथमिवजोवत्वेन प्रतिपत्तव्या उच्छ्वासादिप्राणिधर्म्माणा तेष्वप्रतोयमानत्वा दित्यत्रोच्यते आप्तवचनादनुमानतश्च
तत्राप्तवचन मिदमेवा नुमानत्विद वनस्पतयो विद्रुमलवणोपलादयश्च स्वाश्रये वर्त्तमानाः सात्मकाः समानजातीयांकुरसद्भावादर्शोविकाराङ्कुरवत्
आहच मंसङ्कुरुव्वसमाण जाईरूवंकुरोवलभाओ तरुगणविद्दुमलवणो वलादयोसासयावत्थुत्ति ॥ १ ॥ इह समानजातिगृहण शृङ्गाङ्कुरव्यवच्छेदार्थं सह्निन
समानजातीयोभवतीति ॥ तथा सात्मक मभो भोम भूमिखनने स्वाभाविकसभवा द्दर्दुरवत् अथवा सात्मक मतरीचोदक स्वभावतो व्योमसभूतस्यपातात्
मत्स्यवत् आहच भूमिक्खयसाभाविय सभववोदद्दुरोव्वजलमुत्त [सात्मकत्वेनेति] अहवामच्छोव्वसहा ववोमसभूयपायाओत्ति ॥ १ ॥ तथा सात्मको
वायु रपरप्रेरित तिर्यगनियमितदिग्गतित्वा द्गोवत् ॥ इहषा परप्रेरित गृहणेन लेष्टादिना व्यभिचारः परिहृतः एव तिर्यग्गृहणेनो र्द्धगतिना धूमेन अनि
यमितगृहणेनच नियतगतिना परमाणुनेति तथा तेजः सात्मक माहारोपादाना त्तद्दृद्धिविशेषोपलब्धेः तद्विकारदर्शनाच्च पुरुषव दाहच अपरप्पेरिय
तिरिया नियमियदिग्गमणओनिलोगोव्व अनलोआहाराओ विद्धिविगारोवलभावोत्ति ॥ १ ॥ अथवा पृथिव्यप्तेजोवायवो जोवशरोराणि अभ्रविकार
वर्जित मूर्त्त जातीयत्वात् गवादि शरीर वदिति अभ्रादिविकारोहि मूर्त्तजातीयत्वे सत्यपि न जीवतनव स्तेन तत्परिहारो हेतुविशेषणमाह तणवोप
भाइविगा रसुत्तजाइत्तऊणिलताइं [भूतानीतिप्रक्रमः] सत्यासत्थहयाउणि जीवसजोवरूवावोत्ति ॥ १ ॥ वनस्पतीनां विशेषेण सचेतनत्व भाष्यगाथाभि
रभिधीयते जम्मजराजीवणमरण रोहणाहारदोहलामयवो रोगतिगिच्छाईहिय गोरिव्वसचेयणातरवो ॥ १ ॥ छिक्कप्परोइयाछिक्क मेत्तसकोयवोकुलिंगिव्व

आसयसंचाराओ वियत्तवल्लीवियाणाइं २ ॥ वियत्तत्ति॥ गणधरामंत्रण मिति सम्मादयोवसप्पा यबोहसंकोयणादियोभिमया वउलादयोयसद्दा इविसयका लोवलभावोत्ति ॥ सम्मादयोत्ति शम्यादय: विसयकालोवलभावोत्ति विषयानां गीतसुरागडूषकामिनीचरणताडनादीनां कालोवसतादिरिति ॥ एगाभव सिद्धिइत्यादि ॥ भविष्यतीति भवा भावना सा सिद्धिर्निर्वृत्ति र्येषातेभवसिद्धिका भव्यास्तद्विपरीतास्त्वभवसिद्धिका अभव्या इत्यर्थ: ननुजीवत्वे समानेसति को भव्याभव्ययो र्विशेष उच्यते स्वभावक्ततो द्रव्यत्वेन समानयो र्जीवनभसो र्विवाहच दव्वाइत्तेतुल्ले जीवणभाणसभाववी भेओ जीवाजीवाइमयोजहत हभव्वेयरविसेसोत्ति ॥ १ ॥ आभ्यांविशेषितो न्यो दडक. २ ॥ एगासम्मदिट्ठियाणमित्यादि॥ सम्यगविपरीताद्दष्टि र्दर्शनरुचि स्तत्वानिप्रति येषाते सम्यग्द

रइयाणंवग्गणा एगाअभवसिद्धियाणं णेरइआणंवग्गणा एवंजाव एगाभवसिद्धियाणं वेमाणियाण वग्गणा एगाअभवसिद्धियाणं वेमाणियाणं वग्गणा एगासम्मदिट्ठियाणं वग्गणा एगामिच्छदिट्ठियाणं वग्गणा एगा

ते भव सिद्धिया जीवनो समुदाय एक कहिये । एक अभव सिद्धिया जीवनी वर्गणा छे । जे अनंत भवे मोक्ष नही जास्ये ते अभवसिद्धिया कहिये । एक भवसिद्धिया नारकीनी वर्गणाछे । जेनरकमां भव्यजीवछे तेहनो समुदाय । एक अभव्यनारकीनी वर्गणाछे एम जावचोवीस दंडक कहिवा । एक भवसिद्धिया वैमानिक देवतानी वर्गणाछे । एक अभव्य वैमानिक देवतानी वर्गणाछे । जे मोक्ष नथी पामे तेहने अभव्य कहिये । एक सम्यग् दृष्टी जीव नी वर्गणाछे जे मिथ्यात्वमोहनी कर्मना क्षयोपशमथी भगवानना वचन सांचाकरी जाणे छे ते सम्यग् दृष्टी कहिवा । एक मिथ्यादृष्टी जीवनी वर्ग णाछे जे भगवंतना वचनथी विपरीत करणीना करनार । एक सम्यग्दृष्टी जीवनी वर्गणा जेहने भगवंतना वचन ऊपरि रागपणि नथी द्वेषपणि न

ष्टिका स्तेच मिथ्यात्व मोहनीयचयक्षयोपशमेभ्यो भवंति तथा मिथ्याविपर्यासवती जिनाभिहितार्थसार्थाश्रद्धानवती दृष्टि दर्शनं श्रद्धानं येषांते मिथ्यादृ
ष्टिका' मिथ्यात्वमोहनीयकर्म्मोदया दरुचितजिनवचना इतिभाव उक्तञ्च सूत्रोक्तस्यैकस्या प्यरोचनादक्षरस्यभवतिनरः मिथ्यादृष्टिःसूत्रं हिनः प्रमाणं
जिनाभिहितमिति ॥१॥ तथा सम्यक्मिथ्याचदृष्टि येषांते सम्यग्मिथ्यादृष्टिका जिनोक्तभावान् प्रत्युदासीनाः इहच गभीरभवोदधिमध्यविपरिवर्त्ती जतु
रनाभोगनिर्वर्त्तितेन गिरिसरिदुपलघोलनकल्पेन यथा प्रवृत्ति करणेन सपादितातः सागरोपम कोटाकोटीस्थितिकस्य मिथ्यात्ववेदनीयस्य कर्म्मणः स्थिते
रन्तर्मुहूर्त्त मुदयक्षणादुपर्यतिक्रम्या पूर्वकरणानिवृत्तिकरणसंज्ञिताभ्या विशुद्धि विशेषाभ्या मन्तर्मुहूर्त्तकालप्रमाण मन्तरकरण करोति तस्मिन् कृते तस्य
कर्म्मणः स्थितिद्वयं भवति अंतरकरणा दधस्तनी प्रथमस्थिति रंतर्मुहूर्त्तमात्रा तस्मादेवोपरितनी शेषा तत्र प्रथमस्थितौ मिथ्यात्वदलिक वेदना दसौमिथ्या
दृष्टि रतर्मुहूर्त्तेनतु तस्या मपगतायामन्तरकरणप्रथमसमय एवौपशमिकसम्यक्त्व माप्नोति मिथ्यात्वदलिकवेदनाभावा यथाहि दवानल. पूर्वदग्धेंधनमूष
र वा देशमवाप्यविध्यायति तथा मिथ्यात्ववेदनाग्नि रंतरकरण मवाप्य विध्यायतीति तदेवसम्यक्त्व मौषधविशेषकल्पमासाद्य मदनकोद्रवस्थानीय दर्शन
मोहनीय मशुद्ध कर्म्मत्रिधाभवति अशुद्ध मर्द्धविशुद्ध विशुद्ध श्चेति ३ त्रयाणातेषा पुञ्जानामध्ये यदार्द्ध विशुद्ध. पुञ्जउदेति तदा तदुदयवशा दर्द्ध विशुद्ध
मर्हद्दृष्टतत्वश्रद्धान भवति जीवस्य तेन तदा सौ सम्यग्मिथ्यादृष्टि र्भवति अन्तर्मुहूर्त्त यावत् तत ऊर्द्ध सम्यक्त्वपुञ्ज म्मिथ्यात्वपुञ्जम्वा गच्छतीति सम्यग्मि

## सम्मामिच्छदिठियाणंवग्गणा एगासम्मादिठियाणं णेरइयाणं वग्गणा एगामिच्छादिठियाणं णेरइयाणं वग्ग

यी । एक सम्यग् दृष्टी नारकीनी वर्गणा केतला एक नारकीने धर्म ऊपरि श्रद्धाछे । एक मिथ्याती नारकी नी वर्गणा छे । एक सम्यग् मिथ्याती

थ्यादृष्टि: मिश्रविशेषितो न्योदण्डक स्तत्रच नारकादिष्वेकादशसु पदेषु दर्शनत्रय मस्ति अतउक्त मेव ॥ जावथणिएत्यादि ॥ पृथिव्यादीनां मिथ्यात्व मेवा त स्तेषां तेनैव व्यपदेश: उक्तञ्च ॥ चोद्दसतससेससयामिच्छत्ति ॥ चतुर्दशगुणस्थानवन्त स्त्रसा: स्थावरास्तु मिथ्यादृष्टय एवेत्यर्थ. द्वीन्द्रियादीना मिश्रन्ना स्ति सज्ञिनामेव तद्भावात् तत स्तेषु सम्यग्दृष्टिमिथ्यादृष्टितयैव व्यपदेश: एव ॥ तेइंदियाणविचउरिंदियाणवित्ति ॥ द्वीन्द्रियव द्व्यपदेशद्वयेन वर्गणैकत्व वाच्य पञ्चेंद्रियतिर्यगादीना दर्शनत्रय मप्यस्ति तत स्त्रिधापि तद्व्यपदेशो त एवोक्त ॥ सेसाजहानेरइयत्ति ॥ तथावाच्या इतिशेष. दण्डकपर्यन्तसूत्र पुनरिद ॥

णा एगासम्मामिच्छदिठियाणं णेरइयाणं वग्गणा एवंजावथणियकुमाराणय एगामिच्छदिठियाणं पुढविका इयाणं वग्गणा एवंजाववणस्सइकाइयाणं एगासम्मदिठियाणं बेइंदियाणं वग्गणा एगामिच्छदिठियाणं वेइंदियाणं वग्गणा एवंतेइंदियाणवि चउरिंदियाणवि सेसा जहानेरइया जाव एगासम्मामिच्छदिठियाणं

नारकीनी वर्गणाछे । एह त्रिण भेद नारकीमा छे । एम जाव स्तनितकुमार लगे दश भवनपती मा एकेक वर्गणा कहिवी । एक मिथ्यादृष्टी पृथि वी कायना जीवनी वर्गणाछे । इम अप तेऊ वायु वनसपती नी एकेक वर्गणा एपाच थावरमा एक मिथ्यातछे । एक सम्यग्दृष्टी बेइंद्रीनी वर्गणा समकित वमतो वेइंद्रीमां आवे । तिवारे उपजती वेला सास्वादन गुणठाणो छ आवली प्रमाणे होय तेसम्यक्त कहिये । एक मिथ्या दृष्टी वेइंद्री नी वर्गणा वेइंद्री मां मिश्रपणो न होय समकित वमीने मिथ्याती थायछे । एम तेइंद्री नी वर्गणा समकितीनी मिथ्यात्वीनी एम चौरिंद्रीनी एक व र्गणा । वोजा जिम नारकी कहिआव्या तिम जाणिवा । समकित मिथ्यात्व मिश्र ए तीन भेदनी एकेकी वर्गणा जाणजो । गर्भज तिर्यच मनुष्य व्यं

एगासम्मदिट्ठियाणवेमाणियाणवग्गणा एवंमिच्छदिट्ठियाण एव सम्ममिच्छदिट्ठियाणं एतत्पर्यन्तमाह जावएगासम्ममिच्छेत्यादि ॥ एगाकिण्हपक्खियाण इत्यादि ॥ कृष्णपाक्षिकेतरयो लक्षण ॥ जेसिमवड्ढोपोग्गल परियट्टोसेसओउससारो ॥ तेसुक्कपक्खियाखलु अहिएपुणकिण्हपक्खिओत्ति ॥ १ ॥ एतद्विशेषितो ऽन्यो दण्डक: ४ ॥ एगाकिण्हलेसाणमित्यादि ॥ लिश्यते प्राणी कर्मणा यया सा लेश्या यदाह श्लेषद्रववर्णबन्धस्य कर्मबन्धस्थितिविधात्य: तथा कृष्णादिद्रव्यसाचिव्यात् परिणामोयआत्मन: ॥ स्फटिकस्येवतत्राय लेश्याशब्द:प्रयुज्यतेइति ॥ १ ॥ इयञ्च शरीरनामकर्मपरिणतिरूपा योगपरिणतिरूपत्वात् योगस्यच शरीरनामकर्मपरिणतिविशेषत्वात् यतउक्त ॥ प्रज्ञापनावृत्तिकृता ॥ योगपरिणामो लेश्या: कथपुनर्योगपरिणामो लेश्या यस्मात् सयोगिकेवली

वेमाणियाणं वग्गणा एगाकण्हपक्खियाणं वग्गणा एगासुक्कपक्खियाणं वग्गणा एगाकण्हपक्खियाणं णेरइयाणं वग्गणा एगासुक्कपक्खियाण णेरइयाण वग्गणा एवंचउवीसदण्डउ भाणियव्वो एगाकण्हलेस्साणं व

तर जोतिषी जाव वैमानिक देवता लगे ए सर्वमा दर्शनना तीन भेद छे। सम्यक् मिथ्या मिश्र एक कृष्ण पक्षिया जीवनी वर्गणा। जेहने अर्ध पुदगल परावर्त थी अधिको संसार होय ते कृष्णपाखिया। एक शुकल पाखिया जीवनी वर्गणा छे। जेहने अर्ध पुदगल संसार वाकी छे। ते जीव सुकलपाखिया। अनंता उत्सर्पिणी अवसर्पिणी काल जाय तिवारे एक पुदगल परावर्त होय तेहनो अर्ध। एक कृष्ण पाखिया नारकीनी वर्गणा। जेनारकीने घणो संसार फरवोछे। एक सुकलपाखिया नारकीनी वर्गणा। जेहने अर्ध पुदगल संसार छे। एम चौवीसे दंडके जाणिवा। नारकी असुरकुमार दश दडक पृथिवी प्रमुख वेइंद्री प्रमुख तिर्यंच मनुष्य व्यंतर जोतिषी वैमानिक एव चौवीस। एक कृष्णलेश्या नी वर्गणा। मनना अशुभ

शुक्ललेश्यापरिणामेन विहृत्या न्तर्मुहूर्त्ते शेषे योगनिरोध ङ्करोति ततो अयोगित्व मलेश्यत्व ञ्च प्राप्नोत्यतो ऽवगम्यते योगपरिणामो लेश्येति स पुन र्योगः श रीरनामकर्म्मपरिणतिविशेषः यस्मादुक्तं ॥ कर्म्मंहि कार्म्मणस्य कारण मन्येषां ञ्च शरीराणामिति तस्मादौदारिकादिशरीरयुक्तस्या त्मनो वीर्यपरिणति विशेषः काययोगः । १ । तथौदारिकवैक्रियाहारकशरीरव्यापाराहृतवाक् द्रव्यसमूहसाचिव्या ज्जीवव्यापारोयः स वाग्योगः । २ । तथौदारिकादि शरीरव्यापाराहृतमनोद्रव्यसमूहसाचिव्याज्जीवव्यापारो यः स मनोयोग इति । ३ । ततो यथैव कायादिकरणयुक्तस्यात्मनो वीर्यपरिणति र्योगउच्यते तथैव लेश्यापीति ॥ अन्येतु व्याचक्षते कर्म्मनिष्यन्दो लेश्येति ॥ साच द्रव्यभावभेदा द्विधा तत्र द्रव्यतोलेश्या कृष्णादिद्रव्याण्येव भावलेश्या तज्जन्योजीवप रिणामइति इयञ्च षट्प्रकारा जम्बूफलखादकपुरुषषट्कदृष्टान्ता द्ग्रामघातकचौरपुरुषषट्कदृष्टान्ताद्वा आगमप्रसिद्धा इवसेयेति तत्सूत्राणिसुगमानि न वरं कृष्णवर्णद्रव्यसाचिव्यात् जाता ऽशुभपरिणामरूपा कृष्णा सालेश्या येषाते तथा एव शेषाण्यपि पदानि नवरं नीलाईषत्सुन्दररूपा एवमित्यने नैव क्रमेण याव त्करणात् ॥ एगाकावोयलेसाणमित्यादिसूत्रत्रयद्दृश्य न्तत्र कपोतस्य पक्षिविशेषस्य वर्णेन तुल्यानि यानि द्रव्याणि धूम्राणीत्यर्थः तत्साहाय्या ज्जाता कापोतलेश्या मनाक् शुभतरा सा लेश्या येषान्ते तथा तेजो अग्निज्वाला तद्वर्णानि यानि द्रव्याणि लोहितानीत्यर्थः । तत्साचिव्याज्जाता तेजोलेश्या

## ग्गणा एगाणीललेस्साणं वग्गणा एवंजावसुक्कलेस्साणं वग्गणा एगाकण्हलेस्साणं नेरइयाणं वग्गणा जाव

परिणाम विशेष । एक नीललेश्या नी वर्गणा कांइक कृष्णथी भलेरी जंबूवृक्षने दृष्टांते छ लेश्या । इम कापोतलेश्या नी वर्गणा एक । एक तेजोले श्या नी वर्गणा । एक पदम लेश्या नी वर्गणा । एम एक सुकल लेश्यानी वर्गणा । एम प्रत्येकें पुदगल आश्री छ लेश्या कही । हिवे जीव आश्री

श्या शुभस्वभावा पद्मगर्भवर्णानियानि द्रव्याणि पीतानीत्यर्थः तस्याश्चिव्याज्जाता पद्मलेश्या शुभतरा शुक्लवर्णद्रव्यजनिता शुक्ला अत्यंतशुभेति एतासांचविशेष

त' स्वरूपलेश्याध्ययनादवसेयमिति ॥ एव जस्सजइत्ति ॥ नारकाणामिव यस्य सुरादे र्या यावत्यो लेश्या स्तदुद्देशेनतद्वर्गणैकत्व वाच्य॥ भवणेत्यादिना तल्ले

श्यापरिमाणमाह अत्र संग्रहणी काऊनीलाकिण्हा लेस्साओतिन्निहोंतिनरएसु तइयाएकाऊनीला [पृथिव्यामित्यर्थः] नीलाकिण्हायरिट्ठाए ॥ १ ॥ [पञ्च

म्यामित्यर्थः] किण्हानीलाकाऊ तेऊलेसायभवणवतरिया जोइससोहम्मोसा णेतेऊलेसामुणेयव्वा ॥ २ ॥ कप्पेसणकुमारे माहिंदेचेवबंभलोएय एएसुपम्हले

॥ टीका

**काउलेस्साणं नेरइयाणं वग्गणा एवंजस्सजतिलेस्साउ भवणवइवाण मंतर पुढवि आउ वणस्सइकाइयाणं चत्तारिलेस्साउ तेऊ वाउबेंदिय तेइंदिय चउरिंदियाणं तिन्निलेवेइस्साउ पंचिंदियतिरिक्खजोणियाण मणुस्साणं छलेस्साउ जोइसियाणं एगातेउलेस्सा वेमाणियाणं तिन्निउवरिमलेस्साउ एगाकण्हलेस्साण भवसि**

कहेछे । एक कृष्णलेश्या ना नारकीनी वर्गणा एम जाव कापोतलेश्या ना नारकी वर्गणा । नारकी मां तीन पहिली लेश्याछे । एम जेह दंडकमां

हि जेतली लेश्या होय तेतली एकेक नामे वर्गणा जाणवी । भवनपति व्यंतर पृथिवी पाणी वनस्पती कायमा छ ठेकाणे चारलेश्या होय । तेऊकाय

वायुकाय वेइंद्री तेइंद्री चौरिंद्री एतला माहे त्रिण लेश्या छे । पचेंद्री तिर्यंचने मनुष्यने छ लेश्या छे । जोतिषी चंद्र सूर्य गृह नक्षत्र तरा एहनेएक

तेजोलेश्या । वैमानिक मा ऊपरली त्रिण लेश्या होय । सौधर्म ईशान देवलोके एक तेजोलेश्या । ती जे चौथे पांचमै देवलोके एक पद्मलेश्या ।

छठा देवलोकथी अनुत्तरबिमान लगे सुकललेश्या होय । एक कृष्णलेश्या नां भव्यजीव नी बर्गणा । एक कृष्णलेश्या नां अभव्य जीवनी बर्गणा चो

॥ २

सा तेणपरसुक्कलेसाओ ॥ २ ॥ पुढवीआउवणस्सइ बायरपत्तेयलेसचत्तारि गब्भितिरियनरेसुं छल्लेसातिन्निसेसाणं ॥ ४ ॥ अयं सामान्यो लेश्यादण्डकः अयमेवभव्याभव्यविशेषादन्यः ॥ एगाकण्हलेसाणभवसिद्धियाणवग्गणेत्यादि ॥ एवमिति कृष्णलेश्याया मिव ॥ छसुविति ॥ कृष्णयासह षट्सु अन्यया अ न्याः पञ्चैवा तिदेश्या भवन्तीति द्वेद्वे पदे प्रतिलेश्य भव्या ऽभव्यलक्षणे वाच्ये यथा ॥ एगानीललेसाणभवसिद्धियाणवग्गणेत्यादि ॥ ६ ॥ लेश्यादण्डकएवद र्शनत्रयविशेषितोऽन्यः ॥ एगाकण्हलेसाणसम्मद्दिट्ठियाणमित्यादि जेसिजइदिट्ठिओत्ति ॥ येषा नारकादीनां या यावन्त्यो दृष्टयः सम्यक्त्वाद्या स्तेषा ता वाच्या इति तत्र एकेन्द्रियाणा म्मिथ्यात्वमेव विकलेद्रियाणा सम्यक्त्वमिथ्यात्वे शेषाणांतिस्रोपि दृष्टय इति ॥ ७॥ लेश्यादण्डकएव कृष्णशुक्लपक्षविशिष्टो न्यः एगाकि

ट्ठियाणं वग्गणा एगाकण्हलेस्साणं अभवसिद्धियाणं वग्गणा एवंछसुवि लेस्सासुदोदोपयाणिभाणियव्वाणि एगाकण्हलेस्साणं भवसिद्धियाणं नेरइयाण वग्गणा एगाकण्हलेस्साण अभवसिद्धियाणं नेरइयाणं वग्गणा एवंजस्सजतिलेस्साउ तस्सततियाभाणियव्वाउ जाववेमाणियाणं एगाकण्हलेस्साण सम्मदिट्ठियाणं वग्गणा

देराजलोक प्रमाण संसारमां छै । इम छ लेश्यानें विषे बेबे पद भव्य अभव्य ना जाणिवा । एकेकी वर्गणा कहिवी । हिवे चोवीस दंडके लेश्या कहैछे ॥ एक कृष्णलेश्या नां भवसिद्धिया नारकी नी वर्गणा । एक कृष्णलेश्या ना अभवसिद्धिया नारकी नी वर्गणा । एतले अभव्य नारकी । एम जे दडक मा जेतली लेश्या होय तेतली वर्गणा कहवी । एक भव्यनी एक अभव्यनी । एम जाव वेमानिक देवताना दंडकलगे वर्गणाछे । एक कृष्ण लेश्याना सम्यग् दृष्टी नी वर्गणा संसारमे केतलाईक भव्य जीवछे । एक कृष्ण लेश्याना मिथ्यात्वी नी वर्गणा ससार मां केतलाईक अभव्य जीवछे

ण्हलेसाणं किण्हपक्खियाणमित्यादि ॥ ८ ॥ एते अट्ठचउवीसदंडयत्ति ॥ए तेचैवं १ ॥ भव्वाईहिंविसेसिओ ।२। दंसणेहिं। ३ । पक्खेहिं । ४। लेसा हिं ।५। भव्व ।६। दंसणे ।७। पक्खेहि ।८। विसिट्ठलेसाहिंति॥ इत' सिद्धवर्गणा अभिधीयते तत्र सिद्धा द्विधा अनन्तरसिद्धपरम्परसिद्धभेदात् तत्रानतरसिद्धा पञ्च दशविधा: तद्वर्गणैकत्व माह ॥ एगातित्थेत्यादिना॥ तत्र तीर्यते ऽनेनेति तीर्थं न्द्रव्यतो नद्यादीनां समो नपायश्च भूभागो भौतादिप्रवचन स्वा तत्र द्रव्यतो र्थतात्वस्याप्रधानत्वाद् प्रधानत्वञ्च भावत स्तरणीयस्य ससारसागरस्य तेन ततुं मशक्यत्वा त्सावद्यत्वा दस्येति भावतीर्थन्तु सङ्घो यतो ज्ञानादिभावेन तद्धि

एगाकण्हलेस्साणं मिच्छदिट्ठियाणं वग्गणा एगाकण्हलेस्साणंसम्मामिच्छदिट्ठियाणं वग्गणा एसुवंछविलेसासु जाववेमाणियाणं जेसिंजहिंदिट्ठीउ एगाकण्हलेसाणं कण्हपक्खियाणं वग्गणा एगाकण्हलेसाणं सुक्कपक्खि याण वग्गणा जाववेमाणियाण जस्सजतिलेसाउ एएअट्ठचउवीसदंडया एगातित्थसिद्धाणं वग्गणा एवंजा

एक कृष्ण लेश्याना सम्यग् मिथ्यादृष्टी नी वर्गणा छे । एम नील कापोत तेज पदम सुकल लेश्याने विषे चोवीस दंडक वैमानिक लगे दर्शन तीन नी वर्गणा कहवी जेहने जेतली दृष्टी होय तेहने तेतली वर्गणा एकेंद्री पांचने मिथ्या दृष्टी । बेइंद्री तेइंद्री चोरिंद्रीने बे दृष्टी मिथ्या दृष्टि अने सम्यग् दृष्टी बीजा सर्वजीवने त्रिण दृष्टी । कृष्ण लेश्याना कृष्णपाखिया जीव ते बहुल ससारी जीव तेहनी वर्गणा छे । सर्व ए जाति जीवनो स मुदाय कहेछे । एक समुदाय ससार मां वली कृष्ण लेश्याना सुकलपाखिया जीवनो छे एकवर्गणा एम जाव वैमानिक ना दंडकलगे जाणवुं । जेदं डके जेतली लेश्याहोय तेतली एकेकी वर्गणा ए आठबोल चौवीस दंडके जाणवा । एक तीर्थ सिद्धनी वर्गणा संघ थापना कीधांपछे मुक्ति गया

पञ्चादज्ञानादितो भवाच्च भावभूतात् तारयतीत्याहच ॥ जनाणदसणचरित्त भावओतव्विवक्खभावाओ भवभावओयतारेई तेणउभावाओतित्थति ॥ १ ॥ त्रि षुवा क्रोधाग्निदाहोपशमलोभतृष्णानिरासककर्ममलापनयनलक्षणेषु ज्ञानादिलक्षणेषुवा अर्थेषु तिष्ठतीति त्रिस्थ प्राकृतत्वात्तित्थ आहच दाहोवसमादि सुवा जतिसुवियमहवदसणाईसु तोतितित्थसघोच्चिय उभयचविसेसणविसेसति ॥ १ ॥ विशेषणविशेष्यमिति तीर्थं सङ्घइति सङ्घोवातीर्थमिति त्रयोवा क्रोधा ग्निदाहोपशमादयो ऽर्था फलानि यस्य तत्त्र्यर्थ तित्यन्ति पूर्ववत् आहच कोहग्गिदाहसमणा दओवतेचेवतिन्निजस्सत्था ॥ होइतियत्थतितत्थं तमत्थसदोफ लत्थोय ॥ १ ॥ अथवा त्रयो ज्ञानादयो ऽर्था वस्तूनि यस्य तत्त्र्यर्थ आहच अहवासम्मइसणनाणचरित्ताइतिन्निजस्सत्था ततित्थपुव्वोदियमिहमत्थोवत्थुप ज्जाओत्ति ॥ १ ॥ तन्नतीर्थे सति सिद्धा निर्वृत्ता स्तीर्थसिद्धा ऋषभसेनगणधरादिवत् तेषा वर्गणेति । १ । तथा अतीर्थेतीर्थान्तरे साधुव्यवच्छेदे जातिस्मर णादिना प्राप्तापवर्गमार्गा मरुदेवीवत् सिद्धा अतीर्थसिद्धा स्तेषा ॥ २ ॥ एवकरणात् एगातित्थगरसिद्धाण वग्गणेत्यादि दृश्य । तीर्थमुक्तलक्षण तत् कुर्वन्त्या नुलोम्येन हेतुत्वेन तच्छीलतयाचेति तीर्थकरा: आहच अणुलोमहेउतस्सो लयायजेभावतित्थमेयतु ॥ कुव्वतिपगासति तेओतित्थगराहियत्थकरत्ति ॥ १ ॥ तीर्थकरा: सतो ये सिद्धा स्ते तीर्थकरसिद्धा: ऋषभादिवत् तेषा । ३ । अतीर्थकरसिद्धा: सामान्यकेवलिन: संतो ये सिद्धा: गौतमादिव त्तेषा । ४ । तथा स्वय मात्मबुद्धा स्तत्वज्ञातवत. स्वयबुद्धा स्ते सतो ये सिद्धा स्तेतृथा तेषा । ५ । तथा प्रतीत्यैक किञ्चित् वृषभादिक अनित्यतादि भावनाकारण वस्तु बुद्धा: बुद्धवन्त: परमार्थमिति प्रत्येकबुद्धा स्तेसन्तो ये सिद्धा स्ते तथा तेषां । ६ । स्वयबुद्धप्रत्येकबुद्धानाच बोध्युपधिश्रुतलिङ्गकृतोविशेष: तथाहि स्वयबुद्धाना बाह्यनिमित्तमन्त

ते पुंडरीकादि गणधर । एक अतीर्थ सिद्धनी वर्गणा तीर्थ थाप्या विना जाति स्मरणादिक ग्यान पामी मोक्ष गया मरुदेवी आदिक । इम तीर्थं कर भगवंत सिद्धनी एक वर्गणा । अतीर्थकर सामान्य केवली सिद्धनी गौतमादिक नी वर्गणा । स्वयंबुद्ध पोतानी मेले तत्वग्यान पाम्यां । प्रत्येक

रुपाद बोधिः प्रत्येकबुद्धानान्तु तदपेक्षया करकण्ड्वादीनां भिवेति उपधिः स्वयंबुद्धानां भावादिद्वादशविधः तद्यथा पत्तं । १ । पत्ताबंधो । २ । पायट्ठवणंच ३ । पायकेसरिया । ४ । पडलाइं । ५ । पत्ताणं । ६ । गोच्छगो । ७ पायनिज्जोगो ॥ १ ॥ तिन्नेवयपच्छागा रयहरणं । ११ । चेवहोतिमुहपोत्तित्ति १२ ॥ २ ॥ प्र त्येकबुद्धानान्तु नवविधः प्रावरणवर्जं इति स्वयंबुद्धानां पूर्वाधीतं श्रुतेन नियमः प्रत्येकबुद्धानान्तु नियमतो भवत्येव लिङ्गप्रतिपत्तिः स्वयंबुद्धानामाचार्यसन्निधावपि भवति प्रत्येकबुद्धानांतु देवताप्रयच्छतीति बुद्धबोधिता आचार्यादिबोधिताः संतोये सिद्धा स्तेबुद्धबोधितसिद्धा स्तेषां ७ एतेषामेव स्त्रीलिंग सिद्धानां ८ पुलिंगसिद्धानां ९ नपुंसकलिंगसिद्धानां १० स्वलिंगसिद्धानां रजोहरणाद्यपेक्षया ११ अन्यलिंगसिद्धानां परिव्राजकादिलिंगसिद्धानां १२ गृहिलिंगसिद्धानां मरुदेवीप्रभृतीनां १३ एकसिद्धानामेकैकस्मिन् समये एकैकसिद्धानां १४ अनेकसिद्धानामेकसमये प्रादीनां अष्टशतांतानां सिद्धानामेकावर्गणेति १५ त थानेकसमयसिद्धानां प्ररूपणा गाथा बत्तीसाअडयाला सट्ठीबावत्तरीयबोधव्वा चुलसीईछन्नउई दुरहियअट्ठोत्तरसयंच एतद्विवरणं यदा एक समयेन ए

व एगाएक्कसिद्धाणं वग्गणा एगाअणेक्कसिद्धाणं वग्गणा एगापढमसमयसिद्धाणं वग्गणा एवंजाव अणंत

बुद्ध वस्तु वृषभादिक देखी तत्व ग्यान पाम्या । गुरुनां प्रतिबोधथी ग्यानपाम्या ते बुद्धबोधितसिद्ध । स्त्रीलिंग सिद्ध । नपुंसकलिंग सिद्ध । पुरुष लिंग सिद्ध । स्वलिंग सिद्ध । ओघा मुंहपती सहित सीधाते । अन्यलिंग तापस वेसें वलकलचीरी ने परें सीधा । गृहिलिंगसिद्ध मरुदेवी नी परें । एकसमयें एकज सीधा ते एकसिद्ध । एक समयें एकसोआठ सीधा ते अनेकसिद्ध । तेहनी एक वर्गणा । इम सब ठिकाणे जाणिवो । एक प्रथम समये सीधा तेहनी वर्गणा जावबीजे समये त्रीजें समयें चोथें समयें जाव संख्याते समयें असंख्याते समये अनंते समयें सीधा ते । सब ठिकाणें ए

कादयउत्कर्षेण द्वात्रिंशत्सिद्ध्यति तदा द्वितीयेऽपि समये द्वात्रिंशदेवनैरंतर्येण अष्टौ समयान्याव द्वात्रिंशत्सिद्ध्यति ततऊर्द्धमवश्यमेवांतर भवतीति यदा पुन स्त्रयस्त्रिंशादारभ्य अष्टचत्वारिंशदंता' एकसमयेनसिद्ध्यति तदानिरंतरं सप्तसमया न्यावत् सिद्धन्ति ततो ऽवश्यमेवांतरभवतीति एव यदा एकोनप चाशतमादिंकृत्वा यावत् षष्टिरेकसमयेन सिध्यति तदा निरंतरंषट्समयान् सिद्धंति तदुपरिअंतरसमयादिर्भवति एवमन्यत्रापि योज्य यावत् अष्ट शतमेकसमयेन यदा सिद्ध्यन्ति तदावश्यमेवसमयाद्यन्तर भवतीति ॥ अन्येतु व्याचक्ष्यते अष्टौ समयान् यदा नैरंतर्येण सिद्ध स्तदाप्रथमसमये जघन्येनैकः सिद्धत्यु त्कृष्टतो द्वात्रिंशदिति ॥ द्वितीयसमयेजघन्येनैकः । उत्कृष्टतो ऽष्टचत्वारिंशत्तदेव सर्वत्र जघन्येनैकः समय उत्कृष्टतो गाथार्थोय भावनीयः वत्तीसे त्यादि एत्र मनंतर सिद्धाना तीर्थाविनाभूतभावेन प्रत्यासत्तिव्यपदेशत्वेन पंचदशविधाना वर्गणैकत्व मुक्त मिदानीं परंपरसिद्धानामुच्यते तत्र अपढमसम यसिद्धाणमित्यादि त्रयोदशसूत्री नप्रथमसमय सिद्धाः सिद्धत्वद्वितीयसमयवर्त्तिनः तेषामेवजावत्तिकरणात् ॥ दुसमयसिद्धाणंति ॥ चउपंचछसत्तठ न वदसंसखेज्जसमयसिद्धाणमितिदृश्यं तत्र सिद्धत्वस्य तृतीयादिषु समयेषु द्विसमयसिद्धादय. प्रोच्यन्ते यद्वा सामान्येना प्रथमसमयाभिधान विशेषतो द्विस मयाद्यभिधानमिति अत स्तेषां वर्गणा क्वचित् ॥ पढमसमयसिद्धाणंति पाठ' ॥ तत्रअनन्तरपरंपरसमयसिद्धलक्षणभेदमकृत्वा प्रथमसमयसिद्धअनंत रसिद्धाएवज्ञातव्याः द्व्यादिसमयसिद्धा स्तु यथा श्रुता एवेति ॥ इतो द्रव्यक्षेत्रकालभावाना श्रित्य पुद्गलवर्गणैकत्व चिंत्यते ॥ एगापरसेत्यादि ॥ पूरणग

समयसिद्धाणं वग्गणा एगापरमाणुपोग्गलाणं वग्गणा एवंजावएगाणंतपएसियाणंखंधाणं वग्गणा एगा

केकी वर्गणा जाणवी । एक पुदगल परमाणु जे चक्षु दृष्टीये न देखिये तेहनी वर्गणा । इस वे परमाणु ना खंधनी वर्गणा । बे परमाणु मलियां थी खंध कहिवायछे । इम तीन परमाणु चार परमाणु पांच परमाणु छ परमाणु सात परमाणु आठ परमाणु नव परमाणु दश परमाणु जाव सं

प्रतिज्ञो देवनिग्रहार्थमुद्यतः पुनः कृतालोचनस्तथैव दिवंगतः इतिवक्तव्यताप्रतिबद्धं चुलनीपितेत्युच्यते ३ ॥ सुरादेवेत्ति ॥ सुरादेवो गृहपति वाराण सीनिवासी परोपकृतदेवस्य षोडशरोगातङ्कानुभवतः शरीरे शमना मुपनयामि यदि धर्मं न त्यजसीति वचन मुपश्रुत्य चलितप्रतिज्ञः पुनरालोचितप्रतिक्रान्त स्तथैव दिवङ्गत इतिवक्तव्यताभिधायका सुरादेव इति ४ ॥ चुल्लसयएत्ति ॥ महाशतकापेक्षया लघुः शतका चुल्लशतका. सचालभिकाभिधाननगरनिवासी देवेनोपसर्गकारिणा द्रव्यमुपह्रियमाण मुपलभ्य चलितप्रतिज्ञः पुनर्निरतिचारःसन् दिव मगम यथा तथा यत्रा भिधीयते तच्चुल्लशतकइति ५ ॥ गाहा. वइकुंडकोलियत्ति ॥ कुंडकोलिको गृहपतिः काम्पिल्यवासी धर्मध्यानस्थो यथादेवस्य गोशालमत मुद्ग्राहयत उत्तरं ददौ दिवं च ययौ यथा यत्राभिधीयते तत्तथेति ६ ॥ सद्दालपुत्तेत्ति ॥ सद्दालपुत्र पोलासपुरवासी कुम्भकारजातीयो गोशालको भगवताबोधितः पुनः समतग्राहणोद्यतेन गोशालकेना क्षोभितान्तःकरणः प्रतिपन्नप्रतिमस्य परोक्षकदेवेन भार्यामरणदर्शनतो भग्नप्रतिज्ञः पुनरपिकृतालोचन स्तथैव दिवङ्गत इतिवक्तव्यताप्रतिबद्ध सद्दालपुत्र इति ७ ॥ महासयएत्ति ॥ महाशतकनाम्नो गृहपते राजगृहनगरवसते स्त्रयोदशभार्यापते रुपासकप्रतिमाक्षातमते रुत्पन्नावधि. संजाताधिगते रेवत्यभिधानस्वभार्याकृतानुकूलोपसर्गाचलमतेः सल्लेखनाजातदिवि गते वक्तव्यतानिबद्ध महाशतक इति ८ ॥ नदिणीपियत्ति ॥ नन्दिनीपितृनामकस्य श्रावस्तीवास्तव्यस्य भगवता बोधितस्य सल्लेखनाद्दिवगतस्य वक्तव्यतानिबन्धना नन्दिनीपितृनामक इति ९ ॥ सालेइयापियत्ति ॥ सालेयिकापितृनाम्नः श्रावस्तीनि

## चुल्लसयए गाहावइकुंडकोलिए ॥ १ ॥ सद्दालपुत्तेमहासयए णंदिणीपियसालेइयापिया । अंतगडदसाणं दस

नू २। गाथापती चुलनीपितानूं ३। सुरादेवीनूं ४। चुल्लशतकनू ५। गाथापती कुंडकोलिकनू ६। सद्दालपुत्रनू ७। महाशतकनूं ८। नंदिनीपिता

वासिनो गृहमेधिनो भगवतो बोविलाभिनो नन्तरं तथैव सौधर्मगामिनो वक्तव्यतानिबद्धं सालेयिकापिटनामकं दशममिति १० ॥ दशाप्यमी विंशति वर्षपर्यायाः सौधर्मगता श्चतु.पल्योपमस्थितयो देवा जाता महाविदेहेच सेत्स्यन्तीति अथान्तकृद्दशाना मध्ययनविवरणमाह ॥ अंतगडेत्यादि ॥ इह चाष्टौ वर्गा स्तत्र प्रथमवर्गे दशाध्ययनानि तानिचा मूनि ॥ नमीत्यादि ॥ सार्द्ध रूपक एतानिच नमीत्यादिका न्यतकृत्साधुनामानि अंतकृद्दशांगप्रथमवर्गे अ ध्ययनसंग्रहे नोपलभ्यते यत स्तत्रा भिधीयते गोयमसमुद्दसागर गंभीरेचेवहोइथिमिएय । अयलेकपिल्लेखलु अक्खोभपसेणईविण्हुत्ति ॥ १ ॥ ततो वाच नान्तरापेक्षाणी मानीतिसम्भावयामो नच जन्मान्तरनामापेक्षयै तानि भविष्यतीति वाच्य जन्मान्तराणा तत्रा नभिधीयमानत्वादिति अधुना नुत्तरोप पातिकदशाना मध्ययनविभागमाह ॥ अणुत्तरोइत्यादि ॥ इहच त्रयो वर्गा स्तत्र तृतीयवर्गे दृश्यमानाध्ययनैः कैश्चि त्सह साम्य मस्ति न सर्वै र्यत इहो क्त ॥ इसिदासेइत्यादि ॥ तत्रतुदृश्यते धन्नेयसुनक्खत्ते इसिदासेयआहिए पेल्लएरामपुत्तेय चंदिमापुट्ठिकेइय ॥ १ ॥ पेढालपुत्तेअणगारे अणगारेपोट्टिलेइ य वेहल्लेदसमेवुत्ते एमेएदसआहिएत्ति ॥ २ ॥ तदेवमिहापि वाचनान्तरापेक्षया ऽध्ययनविभाग उक्तो न पुन रुपलभ्यमानवाचनापेक्षयेति तत्र धन्यकसु

अज्झयणा पन्नत्ता तजहा नमीमयंगेसोमिल्ले रामगुत्तेसुदंसणे जमालीयन्नगालीय किंकंमेपल्लएइय ॥ १ ॥ फालेअअठपुत्तेय एमेतेदसआहिया । अणुत्तरोववाइयदसाणं दस अज्झयणा पन्नत्ता तजहा इसिदासेयधन्नेय

नूं ९ । शालिकापुत्रनूं १० ॥ अंतगडदशांगनां दश अध्ययन कह्या तेकहेछे नमीनूं १ । मातंगनूं २ । सोमिलनूं ३ । रामगुप्तनूं ४ । सुदर्शननूं ५ । ज मालीनु ६ । जगालीनु ७ । किंकर्मपल्लेतिनुं अध्ययन ८ । फालितनुं ९ । मङ्कितपुत्रनूं १० ॥ ए दश अध्ययन कह्या॥ अनुत्तरोववाईना दश अध्ययन कह्या

नक्षत्रकथानक एवं काकन्द्यां नगर्यांभद्रासार्थवाहीसुतो धन्यकोनाम महावीरसमीपे धर्म मनुश्रुत्य महाविभूत्याप्रव्रजितः षष्ठोपवासी उज्झमानलब्धा वा म्लपारणीविशिष्टतपसा चीणमांसशोणितो राजगृहे श्रेणिकमहाराजस्य चतुर्दशाना श्रमणसहस्त्राणामध्ये अतिदुष्करकारकइति महावीरेण व्याहृत स्त्रि नच राज्ञा सभक्तिकं वंदित उपबृंहितश्च कालचकृत्वा सर्वार्थसिद्धिविमाने उत्पन्नइति एवसुनक्षत्रोपीति कार्त्तिकइति हस्तिनागपुरे श्रेष्ठी इभ्यसहस्रप्रथ मासनिक' श्रमणोपासको जितशत्रुराजस्या भियोगात् परिव्राजकस्य मासक्षपणपारणके भोजन परिवेषितवान् तमेव निर्वेद कृत्वा मुनिसुव्रतस्वामिसमी पे प्रव्रज्या प्रतिपन्नवान् द्वादशाङ्गधरा भूत्वा शक्रत्वेनो त्पन्न इत्येव यो भगवत्या श्रूयते सो न्यएवान पुन रन्यो ऽनुत्तरसुरेषू पपन्नइति शालिभद्रइति यः पू र्वभवे सगमनामावत्सपालो ऽभवत् सबहुमानश्च साधवे पायसमदात् राजगृहे गोभद्रः श्रेष्टिन. पुत्रत्वेनो त्पन्नो देवीभूतगोभद्रश्रेष्ठिससुपनीतदिव्यभोजन वसनकुसुमविलेपनभूषणादिभि र्भोयाङ्गै रङ्गनाना द्वात्रिंशता सह सप्तभूमिकरम्यहर्म्यतलगतो ललतिस्म वाणिजकोपनीतलक्षमूल्यबहुरत्नकवला गृहीता भद्रया सालिभद्रमात्रा वधूनापादप्रोंच्छनीकृता शेति श्रवणा ज्जातकुतूहले दर्शनार्थ गृहमागते श्रेणिकमहाराजे जनन्याभिहितो यथा त्वा स्वामी द्रष्टु मिच्छतो त्यवतर प्रासादश्शृगा त्स्वामिन पश्येति वचनश्रवणा दस्माक मप्यन्य' स्वामीति भावयन् वैराग्य मुपजगाम वर्द्धमानस्वामिसमीपेच प्रवव्राज विकृष्टतपसा चीणदेह. शिलातले पादपोपगमनविधिना नुत्तरसुरेषू त्पन्नवानिति सोय मिह सभाव्यते केवलम नुत्तरोपपातिकाङ्गे नाधीतइति ॥ तेतली

सुनक्खत्तेयक्कित्तिये सठाणेसालिभद्देय आणंदेतेयलीइय ॥ १ ॥ दसन्नभद्देअइमुत्ते एमेतेदसआहिया । छाया

भगवते तेकहैठे इशिदासनु १ । धन्नानु २ । सुनक्षत्रनो ३ । कार्तिकनो ४ । सस्थाननो ५ । शालिभद्रनो ६ । आणंदनो ७ । तेतलीनो ८ ॥ १ ॥ दशार्ण

इयत्ति ॥ तेतलिसुतइति यो ज्ञाताध्ययनेषु श्रूयते सनाय तस्य सिद्धिगमनश्रवणात् तथा दशार्णभद्रो दशार्णपुरनगरनिवासी विश्वम्भराविभु र्यो भगवत महावीरं दशार्णकूटनगरनिकटसमवसृत मुद्यानपालवचना दुपलभ्य यथा न केनापि वंदितो भगवां स्तथा मया वंदनीयइति राज्यसंपदवलेपा द्भ क्तितश्च चिन्तयामास ततः प्रातः सविशेषकृतस्नानविलेपनाभरणादिविभूषः प्रकल्पितप्रधानद्विपपतिपृष्ठारूढो वरवानादिविविधक्रियाकारिसदृश्यसर्य्यं श्वतुरगसैन्यसमन्वितः पुष्यमाणवकसमुद्घुष्यमाणागणितगुणगणः सामन्तामात्यमन्त्रिराजदौवारिकदूतादिपरिवृतः सातःपुरपौरजनपरिवृत आनंदमयमि व संपादयन्महीमंडल माखंडलइवा मरावत्या नगरा न्निर्जगाम निर्गत्यच समवसरण मभिगम्य यथाविधि भगवंतं भव्यजननलिनवनविबोधनाभिनवभा नुमंत महावीरं वंदित्वा पविविश श्रवगतदशार्णभद्रभूपाभिप्रायच तन्मानविनोदनोद्यत कृताष्टमुखे प्रतिमुख विहिताष्टदंते प्रतिदंतं कृताष्टपुष्करणीके प्रतिपुष्करणिनिरूपिताष्टपुष्करे प्रतिपुष्कर विरचिताष्टदले प्रतिदल विरचितद्वात्रिंशद्बद्धनाटके वारणेन्द्रे सारूढ स्वश्रिया निखिल गगनमण्डल मापूरय न्त ममरपतिमवलोक्य कुतो ऽस्मादृशा मीदृशी विभूतिः कृतो ऽनेन निरवद्यो धर्म इति ततो ऽहमपि त करोमीति विभाव्य प्रवव्राज जितोऽह मधुना त्वयेति भणित्वा यमिन्द्र प्रणिपपातेति सोय दशार्णभद्र सभाव्यते पर मनुत्तरोपपातिकाङ्गे ना धीतः क्वचित्सिद्धश्च श्रूयतइति तथा अतिमुक्तक एवश्र यते अंतकृद्दशागे पोलासपुरे नगरे विजयस्य राज्ञ. श्रीनाम्न्या देव्या अतिमुक्तको नाम पुत्र षड्वार्षिको गौतम गोचरगत दृष्ट्वा एव मवादीत्के यूयं किंप र्यटत ततो गौतमो ऽवादीत् श्रमणा वय भिक्षार्थञ्च पर्यटाम स्ताहि भदंता आगच्छत तुभ्य भिक्षा न्दापयामो तिभणित्वा ङ्गुल्या भगवन्त गृहीत्वा स्व गृह मानैषी त्तत. श्रीदेवी दृष्ट्वा भगवत प्रतिलम्भयामास अतिमुक्तक पुन रवोचत् यूय क्व वसथ भगवा नुवाच भद्र मम धर्माचार्यः श्रीवर्द्धमानस्वामिन उद्याने वसति तत्र वय परिवसामो भदंता गच्छाम्यह भवद्भिः सार्द्धं भगवतो महावीरस्य पादान् वंदितु गौतमो ऽवादीत् यथा सुख देवाना प्रिय त

तो गोतमेन सहागत्या तिमुक्तक: कुमारो भगवतं वदतेस्म धर्मं श्रुत्वा प्रतिबुद्धो गृहमागत्य पितरा वब्रवोत्यथास सारान्निर्विंणोह प्रव्रजामी त्वनुजानो
त युवा ता वूचतु बाल त्व कि ज्जानासि ततो ति मुक्तको ऽवादोत् अम तात यदेवाह जानामि·तदेव न जानामि तदेवजानामीति तत स्तौ तमवादि
ष्टा कथमेतत् सोऽब्रवोत् अम तात जानाम्यह यदुत जातेना वश्य मर्त्तव्य न जानामि तु कदावा कस्मिन्वा कथवा किय च्चिरा द्वा तथा न जानामि
कै कर्मभि र्निरयादिषु जोवा उपद्यन्ते एत त्पुन र्जानामि यथा स्वय कृतै कर्मभिरिति तदेव म्मातापितरौ प्रतिवोध्य प्रवव्राज तप कृत्वाच सिद्धइति
इहत्वय मनुत्तरोपपातिकेषु दशमाध्ययनतयोक्त स्त दपर एवाय भविष्यतीति ॥ दसआहियत्ति ॥ दशाध्ययना न्याख्यातानीत्यर्थ आचारदशाना मध्यय
नविभागमाह ॥ आयारेत्यादि । असमाधि र्ज्ञानादिभावप्रतिषेधो ऽप्रशस्तो भावइत्यर्थ स्तस्य स्थानानि पदानि असमाधिस्थानानि यै रासेवितै रात्म
परोभयाना मिह परत्रो भयत्रवा असमाधि रुत्पद्यते तानीतिभाव स्तानिच विंशति र्द्रुतचारित्वादीनि तत एवा वगम्यानीति तत्प्रतिपादक मध्ययन म
समाधिस्थानानीति प्रथम तथा एकविंशति' शबला' शबल कर्बुर द्रव्यत' पटादि भावत सातिचार चारित्र मिह च शबल चारित्रयोगात् शबला. सा
धव स्तेच करकर्मप्रकारान्तरमैथुनादो न्येकविंशतिपदानि तत्रै वोक्तरूपाणि सेवमाना उपाधित एकविंशति र्भवति तदर्थ मध्ययन मेकविंशतिशबला
इत्यभिधोयते २ ॥ तेत्तोसमासायणाओत्ति ॥ ज्ञानादिगुणा आसामस्त्येन शात्यन्ते अपध्वस्यन्ते यकाभि स्ता आशातना रत्नाधिकविषया अविनयरूपा:

## एदसाणं दस अज्झयणा पसत्ता तंजहा वीसं असमाहिठाणा इक्कवीस सबला तित्तीसआसायणाउ अठ

न्नद्रनो ९ । अयमतानो १०॥ ए दश कह्या १० ॥ आचारागदशाना दश अध्ययन कह्या ते कहैछे वीसअसमाधि स्थानकअध्ययन १ । एकवीस

पुरतो गमनादिका स्तत्प्रसिद्धा स्तास्त्रिंशदेन्ना यत्रा भिधीयन्ते तदध्ययनमपि तथैवोच्यतइति ३ ॥ अट्ठेत्यादि ॥ अष्टविधा गणिसंपत् आचारश्रुतशरीर वचनादिका आचार्यगुणर्द्धि रष्टस्थानकोक्तरूपा यत्रा भिधीयते तदध्ययनमपि तथैवोच्यतइति ४ ॥ दसेत्यादि ॥ दशचित्तसमाधिस्थानानि येषु सत्सु चि त्तस्य प्रशस्तपरिणति र्जायते तानि तथा असमुत्पन्नपूर्वकधर्मचित्तोत्पादादीनि तत्रैव प्रसिद्धा न्यभिधीयन्ते यत्र त त्तथैवोच्यत इति ५ ॥ एक्कारेत्यादि ॥ एकादशोपासकाना श्रावकाणा प्रतिमा. प्रतिपत्तिविशेषा: दर्शनव्रतसामायिकादिविषया' प्रतिपाद्यन्ते यत्र त त्तथैवोच्यतइति ६ ॥ वारसेत्यादि ॥ द्वाद शभिक्षूणा प्रतिमा अभिग्रहा मासिकीद्विमासिकीप्रभृतयो यत्रा भिधीयन्ते त त्तथोच्यतइति ७ ॥ पज्जोइत्यादि ॥ पर्याया ऋतुबद्धिका द्रव्यक्षेत्रकालभा वसम्बन्धिन उत्सृज्यन्ते उज्झान्ते यस्या सा निरुक्तविधिना पर्योसवना अथवा परीति सर्वत' क्रोधादिभावेभ्य उपशम्यते यस्या सापर्युपशमना अथवा प रि. सर्वथा एकक्षेत्रे जघन्यत. सप्ततिदिनानि उत्कृष्टत षण्मासान् वसन निरुक्तादेव पर्युषणा तस्या: कल्प आचारो मर्यादेत्यर्थ: पर्योसवनाकल्प: पर्युपश मनाकल्प पर्युषणाकल्पोवेति सच सक्कोसजोयणविगईनवयमित्यादिक स्तत्रैव प्रसिद्ध स्तदर्थ मध्ययन सएवोच्यत इति ८ ॥ तीसमित्यादि ॥ त्रिंशन्मोहनी यकर्मणो बन्धस्थानानि बन्धनकारणानि वारिमज्झेवगाहित्तात सेपाणेविहिसईत्यादिकानि तत्रैव प्रसिद्धानि मोहनीयस्थानानि तत्प्रतिपादक मध्ययन तथैवोच्यतइति ९ ॥ आयाइट्ठाणमिति ॥ आजनन माजाति: सम्मूर्च्छनगर्भोपपाततो जन्म तस्या: स्थानं ससार स्तत्तनिदानस्य भवतीत्येव मर्थप्रतिपाद

## विहागणिसंपया दसचित्तसमाहिठाणा इक्कारसउवासगपडिमाउ वारसभिक्खुपडिमाउ पज्जोसवणाकप्पे

सबलानो २ ॥ तेत्रीस आशातनानो ३ ॥ आठ आचार्यनी संपदानो ४ ॥ दश चित्तना समाधिना थानक कह्या ५ । इग्यारे श्रावकनी प्रतिमानो ६ ॥

नपर माजातिस्थान मुच्यतइति १० ॥ प्रश्नव्याकरणदशा इचोक्तरूपा न दृश्यमानास्तु पञ्चाश्रवपञ्चसवरात्मिका इती होक्ताना तूपमादीना मध्ययनाना मन्तरार्थ प्रतीयमानएवेति नवर ॥ पसिणाइति ॥ प्रश्नविद्या यकाभिः चौमकादिषु देवतावतार' क्रियतइति तत्र चौमक वस्त्र ॥ अद्दागो ॥ आदर्शो ऽङ्गुष्ठो हस्तावयवो बाहवो भुजाइति बन्धदशानामपि बन्धादाध्ययनानि श्रौतेनार्थेन व्याख्यातव्यानि द्विगृद्धिदशाश्च स्वरूपतोप्यनवसिता दीर्घदशा' स्वरू पतोऽसवगताएव तदध्ययनानितु कानिचि न्नरकावलिकाश्रुतस्कन्धे उपलभ्यते तत्र चन्द्रवक्तव्यताप्रतिबद्ध चन्द्र मध्ययन तथाहि राजगृहे महावीरस्य

तीसमोहणिज्जठाणा । पराहावागरणदसाण दसज्जयणा प० तजहा उवमा संखा इसिभासियाइ आयरि यभासियाइ महावीरभासियाइ खोमगपसिणाइ कोमलपसिणाइ अद्दागपसिणाइ अंगुठपसिणाइ बाहुपसि णाइ । बधदसाण दस अज्झयणा प० त० वंधेमुक्केयदेवद्धी दसारेमण्डलेइय आयरियविप्पडिवत्ती उवज्झाय विप्पडिवत्ती भावणा विमुत्ती सातोकम्मे ॥ दोगिद्धिदसाण दस अज्झयणा प० त० वाए विघाए उववाए

वारेसाधुनी प्रतिमानो ७ ॥ पजूसणाकल्पनो ८ ॥ त्रीश मोहनीकर्मनो ९ ॥ समूर्च्छिम गर्भजना जन्मना थानकनो ॥ १० ॥ प्रश्नव्याकरणदशाना दश अध्ययन कह्या तेकहेछे उपमाअध्ययन १ ॥ सख्याअध्ययन २ ॥ ऋषिभाषितअध्ययन ३ ॥ आचार्यभाषित ४ ॥ महावीरभाषित ५ ॥ चोमक वस्त्र ते हना प्रश्न ६ ॥ कोमलप्रश्ननो ७ ॥ अद्दग ते आदेश तेहना प्रश्नन् ८ ॥ अगूठाना प्रश्ननो ९ ॥ भुजानाप्रश्न १० ॥ बधदशाना दश अध्ययन कह्या तेक हेछे बध १ ॥ मोक्ष २ ॥ देवर्द्धि ३ ॥ दसारमण्डल ४ ॥ आचार्यविप्रतिपत्ती ५ ॥ उपाध्यायविप्रतिपत्ती ६ ॥ भावना ७ ॥ विमुक्ती ८ ॥ सास्वत ९ ॥

चन्द्रो ज्योतिष्कराजो वन्दनं कृत्वा नाट्यविधिं चोपदर्श्य प्रतिगतो गौतमश्च भगवन्तं तद्वक्तव्यतां पप्रच्छ भगवांश्चोवाच श्रावस्त्यां मङ्गजिन्नामाय गृहपतिः रभूत्पार्श्वनाथसमीपे प्रव्रजितो विराध्यच मनाक् श्रामण्यं चन्द्रतया त्पन्नो महाविदेहेच सेत्स्यतीति तथा सूरवक्तव्यताप्रतिबद्ध सूरः सूरवक्तव्यता चन्द्रव न्नवरं सुप्रतिष्ठो नाम्नागभूवेति एको गद्र. स्तद्वक्तव्यता चैव राजगृहेभगवन्तं वन्दित्वा शुक्रे प्रतिगते गौतमस्य तथैव भगवानुवाच वाराणस्यां सोमिलना मा ब्राह्मणो यमभवत् पार्श्वनाथञ्चा पृच्छत् तं भतेजवणिज्जं तथा सरिसवयामासाकुलत्थायते भोज्जा तथा एगेभवन्दुवेभवमित्यादि भगवता चैतेषु विभक्ते ष्वाचितः श्रावकोभूत्वा पुनः र्विपर्यासा द्वारामादिलौकिकधर्मस्थानानि कारित्वा दिक्पोचकतापसत्वेन प्रव्रज्य प्रतिषष्ठपारणके क्रमेण पूर्वादिदिग्भ्य श्रा नीय कन्दादिकं मभ्यवजहारा न्यदा सौ यत्र क्वचन गर्त्तादौ पतिष्यामि तत्रैव प्राणा स्त्यक्ष्यामो त्यभिग्रहं मभिगृह्य काष्ठमुद्रया मुखं बध्वा उत्तराभिमुखः प्रतस्थौ तत्र प्रथमदिवसे पराह्नसमये ऽशोकतरो रधो होमादिकर्मकृत्वा वास तत्र देवेन केनाप्युक्तो ऽहो सोमिलब्राह्मण महर्षे दुःप्रव्रजितं ते पुनः द्वितीये ऽहनि तथैव सप्तपर्णस्याध उषित उक्ततृतीयादिषु दिनेषु अश्वत्थवटोदुम्बराणा मध उषितो भणितो देवेन ततः पञ्चमदिने वादो दसौ कथन्नाम मे दुःप्रव्रजितं देवो ऽवोचत् त्वं पार्श्वनाथस्य भगवतः समीपे अणुव्रतादिकं श्रावकधर्मं प्रतिपद्या धुना ऽन्यथा वर्त्तमद्रति दुःप्रव्रजितं तव ततो द्यापि तमेवा णुव्रतादिकं धर्मं प्रतिपद्यस्व येन सुप्रव्रजितं तव भवतीत्येवं मुक्त स्तयेव चकार ततः श्रावकत्वं प्रतिपाल्या नालोचितप्रतिक्रान्त. कालङ्कृत्वा शुक्रावतसके

**सुखित्ते कसिणे बायालीसंसुविणा तीसंमहासुविणा बावत्तरिसव्वसुमिणा हारे रामगुत्ते एमेएदसञ्झाहिया ।**

कर्म १० ॥ दोगिद्धि दशाना दश अध्ययन कह्या ते कहेछे वात १ ॥ विवात २ ॥ उपपात ३ । सुक्षेत्र । कृष्ण । बेतालीससुपन ॥ त्रीसमहास्वप्न ॥

विमाने शुक्रत्वेनो त्पन्नइति तथा श्रीदेवीसमाश्रय मध्ययन श्रीदेवीति तथाहि सा राजगृहे महावीरवन्दनाय सौधर्मादाजगाम नाट्यं दर्शयित्वा प्रतिजगामच गौतम स्तत्पूर्वभव पप्रच्छ भगवां स्त ज्जगाद राजगृहे सुदर्शनश्रेष्ठी बभूव प्रियाभिधानाच तद्भार्या तयो सुता भूतानाम वृहत्कुमारिका पार्श्वनाथसमीपे प्रव्रजिता शरीरवकुशा जाता सातिचाराच मृत्वा दिवङ्गता महाविदेहेच सेत्स्यतीति तथा प्रभावती चेटकदुहिता वीतभयनगरना यकोदायनमहाराजभार्या यया जिनबिंबपूजार्थं स्नानानन्तर चेट्या सितवसनार्प्पणेपि विभ्रमा द्रक्तवसनमुपनीत मनवसर मनगेति मन्यमानया म न्युना दर्प्पणेन चेटिका हता मृताच सा ततो वैराग्या दनशन प्रतिपद्य देवतया ययाचो ज्जयनो राजानं प्रति विक्षेपेण प्रस्थितस्य ग्रीष्मे मासि पिपा साभिभूतसमस्तसैन्यस्योदायनमहाराजस्य स्वच्छशीतलजलपरिपूर्णत्रिपुष्करकारणेनो पकारो ऽकारी त्येव लक्षणप्रभावतीचरितयुक्त मध्ययन प्रभाव तीति सम्भाव्यते नचेव निरयावलिकाश्रुतस्कन्धे दृश्यतइति पंचम तथा बहुपुत्रिका देवी प्रतिबद्ध सेवाध्ययन मुच्यते तथाहि राजगृहे महावीरवन्दना र्थं सौधर्मा द्बहुपुत्रिकाभिधाना देवी समवततार वन्दित्वाच प्रतिजगाम केय मिति पृष्टे गौतमेन भगवा नवादीत् वाराणस्यां नगर्यां भद्राभिधानस्य सार्थवाहस्य सुभद्राभिधाना भार्येय बभूव साच वन्ध्या पुत्रार्थिनो भिक्षार्थं मागत मार्यासघाटक पुत्रलाभ पप्रच्छ सचधर्म मचीकथत् प्राव्राजीच सा बहु

दीहदसाणं दस अज्झयणा प० तंजहा चंदेसूरेयसुक्केय सिरिदेवीपहावई दीवसमुद्दोववत्ती बहुपुत्तीमंदरेइय।

बिहोत्तरि सर्व स्वप्न ॥ हार ९ ॥ रामगुप्त १० ॥ इम ए दश कह्या प्राये ए अध्ययननां स्वरूप नथीजाण्या इम टीकामा कह्योछे ॥ दीर्घदशाना दश अध्ययन कह्या ते कहेछे चद्राध्ययन १ ॥ सूर्याध्ययन २ ॥ शुक्राध्ययन ३ ॥ श्रीदेवी ४ ॥ प्रभावतीनो ५ ॥ द्वीपसमुद्रविज्ञप्ति ६ ॥ बहुपुत्रिकानो ७ ॥ मे

जनापत्येषु प्रीत्या भ्यङ्गोद्वर्त्तनापरायणा सातिचारा मृत्वा सौधर्ममगमत् तत श्युत्वा च विभेलसनिवेशे ब्राह्मणीत्वे नोत्पत्स्यते ततः पितृभागिनेयभार्या भविष्यति युगलप्रसवाच सा षोडशभि र्वर्षैर्द्वात्रिंशदपत्यानि जनयिष्यति ततो सौ तन्निर्वेदा दार्याः प्रव्यति ताश्च धर्मं कथयिष्यन्ति श्रावकालश्च सा प्रतिप त्स्यते कालान्तरे प्रव्रजिष्यति सौधर्मेचन्द्रसामानिकतयो त्पद्य महाविदेहे सेत्स्यतीति तथा स्थविरः सम्भूतविजयो भद्रबाहुस्वामिनो गुरुभ्राता स्थूलभद्रस्य सगडालपुत्रस्य दीचा दाता तद्वक्तव्यता प्रतिबद्ध मध्ययन सएवोच्यतइति नवम शेषाणि चौण्यप्रतीतानि सत्तेपिकादशा अप्यनवगतस्वरूपाएव तदध्ययना ना पुन रय मर्थः ॥ खुड्डिरत्यादि ॥ इहावलिकाप्रविष्टेतरविमानप्रविभजन यत्रा ध्ययने तद्विमानप्रविभक्ति स्तच्चैक मल्पग्रन्थार्थं तथा न्यन्महाग्रन्थार्थ मतः चुल्लिकाविमानप्रविभक्ति र्महतीविमानप्रविभक्तिरिति अंगस्या चारादे श्चूलिका ऽगचूलिका यथा चारस्या नेकविधा इहोक्तानुक्तार्थसंग्राहिका चूलिका ॥ वग्गचूलियत्ति ॥ इह वर्गो ऽध्ययनादिसमूहो यथा न्तकृद्दशा स्वष्टौ वर्गा स्तस्यचूलिका वर्गचूलिका ॥ विवाहचूलियत्ति ॥ व्याख्या भगवतीतस्या श्चूलिका व्याख्याचूलिका अरुणोपपातइति इहारुणोनाम देव स्तत्समयनिबद्धो ग्रन्थ स्तदुपपातहेतु ररुणोपपातो यदा तदध्ययन मुपयुक्त' सन् श्रमणः

**थेरेसंभूयविजए पम्हउस्सासनिस्ससे ॥ संखेवियदसाणं दस अज्झयणा प० तजहा खुड्डियाविमाणपविभत्ती महल्लियाविमाणपविभत्ती अंगचूलिया वग्गचूलिया विवाहचूलिया अरुणोववाए वरुणोववाए गरुलोववाए**

रुनो ८ ॥ १ ॥ थविर संभूतविजय थूलभद्रना गुरुनो अध्ययन ९ ॥ थविरपद्मउत्स्वासनों १० ॥ संक्षेपिका दशानां दश अध्ययन कह्या तेकहैछे क्षुद्रि काविमानप्रविभक्ति १ ॥ महल्लिकाविमानप्रविभक्ति २ ॥ अंगचूलिका ३ ॥ वर्गचूलिका ४ ॥ विवाहचूलिका ५ ॥ अरुणोपपात ६ ॥ वरुणोपपात ७ ॥

परिवर्त्तयति तदा सा वरुणोदेवः स्वसमयनिमद्भत्वा चलितासनः सम्भ्रमोद्भ्रान्तलोचनः प्रयुक्तावधि स्त द्विज्ञाय हृष्टप्रहृष्ट चलचपलकुण्डलधरो दिव्यया द्यु त्या दिव्यया विभूत्या दिव्यया गत्या यत्रै वासौ भगवान् श्रमण स्तत्रै वोपागच्छति उपागत्यच भक्तिभरावनतवदनो विमुक्तवरकुसुमवृष्टि रवपतति प्रव पतत्यच तदा तस्य श्रमणस्य पुरतः स्थित्वा ऽतर्हितः कृताञ्जलिका उपयुक्तः सवेगविशुद्ध्यमानाध्यवसान' श्रृण्व स्तिष्ठति समासेच भणति सुस्वाध्यायित सु स्वाध्यायितमिति वर वृणिष्वेति ततो सा विहलोकनिष्पिपास समतृणमणिमुक्तालोष्टकाञ्चन सिद्धिवधूनिर्भरानुगतचित्तः श्रमणः प्रतिभणति नमे वरेणा र्थइति ततोसा वरुणो देवो धिकतरजातसवेग. प्रदक्षिणा कृत्वा वन्दित्वा नमसित्वा प्रतिगच्छति एव वरुणोपपातादिष्वपि भणितव्यमिति एवभूतच श्रुतं कालविशेषएव भवतीति दशस्थानकावतारि तत्स्वरूपमाह ॥ दसेत्यादि ॥ सूत्रद्वयं सुगम यथोपाधिवशा त्कालद्रव्य भेदव त्तथा नारकादिजीवद्रव्याण्यपी त्याह ॥ दसविहेत्यादि ॥ सूत्राणि चतुर्विंशति र्नविद्यते ऽन्तर व्यवधान मस्ये त्यनन्तरो वर्त्तमान. समय स्तत्रो पपन्नका अनन्तरोपपन्नका येषा मुत्पन्ना ना मेकोपि समयो नातिक्रात स्तण्तइति येषा तू पपन्नाना द्व्यादय समया जाता स्ते परम्परोपपन्नका परम्परसमयेषू पपन्नत्वा त्तेषा मित्येवं कालवि

वेलधरोववाए वेसमणोववाए ॥ दससागरोवमकोडाकोडीउ कालोउस्सप्पिणीए ॥ दससागरोवमकोडाको डीउकालोउसप्पिणीए ॥ दसविहा नेरइया प० तजहा अणतरोववन्ना परपरोववन्ना अणतरोवगाढा पर

गरूलोपपात ८ ॥ वैश्रमणोपपात ९ ॥ वेलधरोपपात १० ॥ दशकोडाकोडि सागरोपमनो काल उत्सर्प्पिणी ॥ दशकोडाकोडि सागरोपमनो का ल अवसर्प्पिणी ॥ दशप्रकारना नारकी कह्या तेकहेछे अतरारहितउपना १ ॥ परपरानाउपना २ ॥ अनतरक्षेत्रे रह्या ३ ॥ परपराये क्षेत्रे रह्या ५ ॥

शेषोपाधिकृतो भेद स्तथा विवक्षितप्रदेशापेक्षया ऽनन्तरप्रदेशे ष्ववगाढा अवस्थिता अनन्तरावगाढा अथवा प्रथमसमयावगाढा अनन्तरावगाढा एतद्वि लक्षणाः परम्परावगाढा अयं क्षेत्रतो भेद स्तथा अनन्तराव्यवहिता जीवप्रदेशे राक्रान्ततया स्पृष्टतयावा पुद्गलानाहारयन्ती त्यनन्तराहारकाः येतु पूर्वं व्य वहितान् सत' पुद्गलान् स्वक्षेत्र मागतानाहारयति ते परम्पराहारका अथवा प्रथमसमयाहारका अनन्तराहारका इतरे त्वितरे अयन्तु द्रव्यकृतो भेद इति नविद्यते पर्याप्तत्वें ऽतर येषा ते ऽनन्तरा स्तेचते पर्याप्तका श्चे त्यनन्तरपर्याप्तकाः प्रथमसमयपर्याप्तकाइत्यर्थ इतरेतु परम्परपर्याप्तका अयं भावक्ष तो भेदः पर्याप्ते भावत्वादिति चरमनारकभवयुक्तत्वा च्चरमा नपुन र्नारकाभविष्यति यइतिभाव स्तद्विपरीता अचरमा अयमपि भावकृतएव भेद श्चरमा चरमत्वयो र्जीवपर्यायत्वादिति एवमित्यादि नारकव द्दशप्रकारत्व भेद नैरन्तर्येण चतुर्विंशतिदण्डकोक्तानां वैमानिकान्तानामपि योजनीयमिति द ण्डकस्या द्दौ दशधा नारकाउक्ता अथ तदाधारा न्नारकादिस्थितिच दशस्थानकानुपाततो निरूपयन् ॥ चउत्थीएइत्यादि ॥ सूत्राष्टादशकमाह सुगम चैतद्दि ति अनन्तर लान्तकदेवाउक्ता स्तेच लब्धभद्राइति भद्रकारिकर्मकारणान्याह ॥ दसहीत्यादि ॥ आगमिष्य दागामि भवान्तरभावि भद्र कल्याण सुदेवत्व

परोवगाढा अणंतराहारगा परंपराहारगा अणंतरपज्जत्ता परंपरपज्जत्ता चरिमा अचरिमा । एवं निरंतरं जाव वेमाणिया ॥ चउत्थीएण पकप्पभाए पुढवीए दस नरयावाससयसहस्सा प० । रयणप्पभाए पुढवीए

अनतरा रहिआ पुद्गलना आहारी ६ ॥ परंपरा आहारी ६ ॥ अनंतरपर्याप्ता ७ ॥ परंपरा पर्याप्ता ८ ॥ चरिमजे फरी नारकी नही थाय ९ ॥ अच रिम १० ॥ इम निरंतर यावत् वैमानिक २४ ॥ चोथी पंकप्रभा पृथिवीने विषे दशलाख नरकावाशा कह्या ॥ रतनप्रभा पृथिवीनेंविषे जघन्य आ

लक्षण मनन्तर सुमानुगत्वप्राप्त्या मोक्षप्राप्तिलक्षणांच येषांते आगमिष्यद्भद्रा स्तेषा भाव आगमिष्यद्भद्रता तस्यै आगमिष्यद्भद्रतायै तदर्थमित्यर्थ. आगमिष्य

जहन्नेणं नेरइयाण दसवाससहस्साइं ठिई प० । चउत्थीएणं पंकप्पभाए पुढवीए उक्कोसेण नेरइयाणं दस सागरोवमाइं ठिई प० । पंचमीए धूमप्पभाए पुढवीए जहन्नेण नेरइयाणं दससागरोवमाइ ठिई प० ॥ असुरकुमाराणं जहन्नेण दसवाससहस्साइ ठिई पन्नत्ता । एव जाव थणियकुमाराण ॥ वायरवणस्सइकाइ याणं उक्कोसेण दसवाससहस्साइं ठिई प० । वाणमंतराण देवाण जहन्नेण दसवाससहस्साइ ठिई प० । बंभ लोएकप्पे उक्कोसेण देवाण दससागरोवमाइं ठिई प० । लंतएकप्पे देवाण जहन्नेण दससागरोवमाइं ठिई प० दसहिठाणेहि जीवा आगमेसिभद्दत्ताए कम्मं पगरेंति त० अनिदाणयाए दिठिसंपन्नयाए जोगवाहियत्ताए

ऊखु नारकीनु दशहज्जार वरसनु कह्यो ॥ रत्नप्रभा पृथ्वीनेविषे जघन्य नारकीनी दशहज्जारवरसनी थिति कही ॥ चोथी पंकप्रभा पृथ्वीने विषें उत्कृष्टी नारकीने दश सागरोपमनी थिति कही भगवते। पांचमी धूमप्रभा पृथ्वीनेविषे जघन्य नारकीनी दशसागरोपमनी थिति कही। असुरकुमा रनें जघन्य दशहज्जारवरसनी थिति कही ॥ इम यावत् स्तनितकुमारने। वादरवनस्पतिकायनी उत्कृष्टी दशहज्जारवरसनी आऊखानी थिति कही॥ वाणव्यंतरदेवतानी जघन्य दशहज्जार वरसनी थिति कही भगवते। ब्रह्मदेवलोके उत्कृष्टी देवतानी दशसागरोंपमनी थिति कही ॥ लांतक ६। देव लोके देवतानी जघन्य दशसागरोपमनी थिति कही ॥ दश थानके जीव आगमोक्त धर्मने विषें भद्रकपणानु कर्म बांधे ते कहेछे नीआणुनकरे १।

इद्रतयावा कर्मं शुभप्रकृतिरूप प्रकुर्वन्ति बध्नन्ति तद्यथा निदायते लूयते ज्ञानाद्याराधनालता आनन्दरसोपेतमोक्षफला येन परशुनेव देवेन्द्रादिगुणर्द्धि प्रार्थनाध्यवसानेन तन्निदान मविद्यमानं तद्यस्य सो ऽनिदान स्तद्भाव स्तत्ता तया हेतुभूत या निरुत्सुकतयेत्यर्थः १ दृष्टिसम्पन्नतया सम्यग्दृष्टितया २ योगवाहितया श्रुतोपधानकारितया योगेनवा समाधिना सर्वत्रानुत्सुकत्वलक्षणेन वहतो त्येवशीलो योगवाही तद्भाव स्तत्ता तया ३ क्षान्त्या क्षमत इति क्षान्तिक्षमणः क्षातिग्रहण मसमर्थताव्यवच्छेदार्थं यतो ऽसमर्थोपि क्षमतइति क्षान्तिक्षमणस्य भाव स्तत्ता तया ४ जितेन्द्रियतया करणनिगृहे ण ५ ॥ अमाइल्लयाएत्ति ॥ माइल्लो मायावा स्तत्प्रतिषेधेना मायावा स्तद्भाव स्तत्ता तया ६ तथा पार्श्वे बहि र्ज्ञानादीना न्देशतः सर्वतोवा तिष्ठतीति पा र्श्वस्थ उक्तच सोपासत्थोदुविहो देसेसव्वेयहोइनायव्वो सव्वमिनाणदंसणचरणाणजोउपासत्थो ॥ १ ॥ देसंमिउपासत्थो सिज्जायरभिहडनियतंपिडच । नी यचअग्गपिंड भुजइनिक्कारणेचेवत्ति ॥ २ ॥ नियतपिण्डो यथामयैताव द्दातव्यं भवतातु नित्यमेव ग्राह्यमित्येव नियततया यो गृह्यते नीयमिति नित्य सदा ग्रपिण्डो ऽप्रवृत्ते परिवेषणे आदावेव यो गृह्यत इति पार्श्वस्थस्य भावः पार्श्वस्थता तया ७ तथा शोभनः पार्श्वस्थादिदोषवर्जिततया मूलोत्तरगुण सम्पन्नतयाच सचासौ श्रमणश्च साधुश्रमण स्तद्भाव स्तत्ता तया ८ तथा प्रकृष्ट प्रशस्त प्रगतवा वचन मागमः प्रवचन द्वादशांगं तदाधारोवा सघ स्तस्य वत्सलता हितकारिता प्रत्यनीकत्वादिनिरासेनेति प्रवचनवत्सलता तया ९ तथा प्रवचनस्य द्वादशाङ्गस्यो द्भावन प्रभावनं प्रावचनिकत्वधर्मकथावादादि

## खंतिखमणयाए जीइंदियाए अमाइल्लयाए अपासत्थयाए सुसामन्नयाए पवयणवच्छल्लयाए पवयणउज्झावणया

समकितसहित २ । योग उपधान वहतो ३ । क्षमा आणी खमते पाचइंद्रीनें जीतवे माया कपटरहित पणे पासत्थापणूं मूंकते सुसाधुपणे जिन सा

:१० ॥
१२ ॥

लब्धिभि र्वर्णवादजनन प्रवचनोद्भावन तदेव प्रवचनोद्भावनता तयेति १० एतानि चागमिष्यद्भद्रताकारणानि कुर्वता आशंसाप्रयोगो न विधेयइति तत्स्वरूप माह ॥ दसेत्यादि ॥ आशसन माशसा इच्छा तस्याः प्रयोगो व्यापारण करण माशंसैव प्रयोगो व्यापार' आशसाप्रयोग सूत्रेच प्राकृतत्वात् ॥ आससप्पओगे त्ति ॥ भणितं तत्र इहास्मिन् प्रज्ञापक मनुष्यापेक्षया मानुषत्वपर्याये यो वर्त्तते लोक प्राणिवर्ग स इह लोक स्तद्व्यतिरिक्तस्तु परलोक स्तत्रे हलोकं प्रति प्राशंसाप्रयोगो यथा भवेय मह मित स्तपश्चरणा च्चक्रवर्त्यादिरिती इहलोकाशसाप्रयोग एव मन्यत्रापि विग्रहः कार्यः परलोकाशसाप्रयोगोयथा भवेय मह मितस्तपश्चरणा दिन्द्र इन्द्रसामानिकोवा २ द्विधा लोकाशसाप्रयोगो यथा भवेय मिन्द्र स्तत श्चक्रवर्त्ती ३ अथवा इहलोके इहजन्मनि किंचि दाशास्त एव परजन्म न्युभयत्रवेति एतत्त्रय सामान्य मतो न्ये तद्विशेषाएवा स्त्विच सामान्यविशेषयो र्विवक्षापेक्षो भेद इत्या शसाप्रयोगाणा दशधात्वं न विरुध्यते त था जीवित प्रत्याशसा चिरमहंजीवित भवत्विति जीविताशसाप्रयोग ४ तथा मरण प्रत्याशसा शीघ्र मेमरण मस्त्विति मरणाशसाप्रयोगः ५ तथा का मौशब्दरूपे तौ मनोज्ञौ मे भूयास्तामिति कामाशसाप्रयोगः ६ तथा भोगा गन्धरसस्पर्शा स्ते मनोज्ञामे भूयासुरिति भोगाशसाप्रयोगः ७ तथा कीर्त्तिः श्रुता

**ए। दसविहे आसंसप्पओगे प० तजहा इहलोगासंसप्पओगे परलोगाससप्पओगे दुहओलोगासंसप्पओगे जीवियासं सप्पओगे मरणासंसप्पओगे कामासंसप्पओगे भोगाससप्पओगे लाभाससप्पओगे पूयासंसप्पओगे सक्कारासंसप्पओगे**

धु सर्वनु हितकरते प्रवचन प्रभावनाये धर्मकथादिक करते ॥ दशप्रकारे इच्छा वाछानो प्रयोग कह्यो ते कहेछे इहलोगासप्रयोग १ । परलोकास प्रयोग २ । इहलोकपरलोकसप्रयोग ३ । जीवितसप्रयोग ४ । दुखआवे मरवानीवाछा कामनीवाछा भोगनी वाछानो प्रयोग लाभनी वाछानो प्रयो

दिलाभो भूयादिति लाभाशंसाप्रयोगः ८ तथा पूजा पुष्पादिपूजन मे स्यादिति पूजाशंसाप्रयोग' ९ सत्कारः प्रवरवस्त्रादिभिः पूजनं तन्मे स्यादिति सत्कारा शंसाप्रयोगइति १० उक्तलक्षणा दशाशंसाप्रयोगा स्तैश्चि धर्म माचरन्तीति धर्मं सामान्येन निरूपयन्नाह ॥ दसेत्यादि ॥ ग्रामा जनपदाश्रयास्तेषा तेषुवा धर्म समाचारो व्यवस्थेति ग्रामधर्मः सच प्रतिग्राम भिन्नइति अथवा गाम इन्द्रियग्रामो रूढे स्तद्धर्मो विषयाभिलाषः १ नगरधर्मो नगराचारः सोपि प्रति नगर प्रायोभिन्नएव २ राष्ट्रधर्मो देशाचारः ३ पाखण्डधर्म पाखण्डिना माचार. ४ कुलधर्म उग्रादिकुलाचारो ऽथवा कुल चान्द्रादिक मार्हतानागच्छसमू हात्मकं तस्य धर्म सामाचारी ५ गणधर्मो मल्लादिगणव्यवस्था जैनानावा कुलसमुदायोगणः कोटिकादि स्तद्धर्म स्तत्सामाचारी ६ संघधर्मो गोष्ठीसमाचार आर्हतानावा गुणसमुदायरूप श्चतुर्वर्णोवा संघ स्तद्धर्म स्तत्समाचारः ७ श्रुतमेवा चारादिक दुर्गतिप्रपतज्जीवधारणा द्धर्मः श्रुतधर्मः ८ चयरिक्तीकरणा च्चारित्र तदेव धर्म श्चरित्रधर्म. ९ अस्तयः प्रदेशा स्तेषा कायो राशि रस्तिकाय. सएव धर्मोगतिपर्याये जीवपुद्गलयो र्धारणा दित्यस्तिकायधर्मः १० अयञ्च ग्रामधर्मादिधर्म' स्थिरै कृतो भवतीति स्थविरा न्निरूपयति ॥ दसेत्यादि ॥ स्थापयति दुर्व्यवस्थितं जनं सन्मार्गे स्थिरो कुर्वतीति स्थविरा स्तत्र ये ग्राम नगरराष्ट्रेषु व्यवस्थाकारिणो बुद्धिमन्त आदेयाः प्रभविष्णव स्ते तत्तत्स्थविराइति ३ प्रशासति शिक्षयन्ति येते प्रशास्तारो धर्मोपदेशका स्तेचते स्थिरीक रणा त्स्थविराश्चेति प्रशास्तृस्थविराः ४ ये कुलस्य गणस्य संघस्यच लौकिकस्य लोकोत्तरस्यच व्यवस्थाकारिण स्तद्भङ्क्तुश्च निग्राहका स्ते तथोच्यते ७ जाति

**दसविहे धम्मे प० तंजहा गामधम्मे नगरधम्मे रठ्ठधम्मे पाखंडधम्मे कुलधम्मे गणधम्मे संघधम्मे सुयधम्मे**

ग पूजानी वाछानो प्रयोग सत्कारनी वाछानो प्रयोग ॥ दशप्रकारे धर्म कह्यो तेकहेछे ग्रामधर्म विषयाभिलाष १ । नगरधर्म नगराचार २ । राष्ट्र

स्थविराः षष्टिवर्षप्रमाणजन्मपर्यायाः ८ श्रुतस्थविराः समवायाद्यङ्गधारिणः ९ पर्यायस्थविरा विंशतिवर्षप्रमाणप्रव्रज्यापर्यायवंतइति १० स्थविराश्च
पुत्रवदाश्रितान् परिपालयंतीति पुत्रनिरूपणायाह ॥ दसपुत्तेत्यादि ॥ पुनाति पितरं पातिवा पितृमर्यादामिति पुत्रः सूनुः सचात्मनः पितृशरीरा
ज्जात आत्मजो यथा भरतस्यादित्ययशाः १ क्षेत्रं भार्या तस्या जातः क्षेत्रजो यथा पंडोः पाण्डवा लोकरूढ्या तद्भार्यायाः कुन्त्याएव तेषां पुत्रत्वात्तत्पाण्डो
रनुत्पादितत्वादिति २ ॥ दिण्णएत्ति ॥ दत्तकः पुत्रतया वितीर्णो यथा बाहुबलिना ऽनिलवेगः श्रूयते सच पुत्रवत् पुत्र एव सर्वत्र ३ ॥ विण्णएत्ति ॥
विनयितः शिक्षां ग्राहितः ४ ॥ उरसेत्ति ॥ उपगतो जातो रसः पुत्रस्नेहलक्षणो यस्मिन् पितृस्नेहलक्षणोवा यस्य सा वुपरसः उरसिवा हृदये स्नेहात् वर्त्तते
यः सऔरसः ५ मुखरएव मौखरो मुखरतया चाटुकरणतो य आत्मानं पुत्रतया ऽभ्युपगमयति स मौखर इतिभावः ६ शौण्डीर्य शौर्यवता शूरएव

चरित्तधम्मे अत्थिकायधम्मे । दस थेरा प० तंजहा गामथेरा नगरथेरा रट्ठथेरा पसत्थारथेरा कुलथेरा गणथेरा संघथेरा जाइथेरा सुयथेरा परियायथेरा । दसपुत्ता पं० तंजहा अत्तए खित्तए दिन्नए विन्नए उरसे मोहरे

धर्म देशाचार ३ । पाखण्डधर्म पाखण्डीनो आचार ४ । कुलधर्म कुलाचार गच्छधर्म गच्छाचार संघधर्म चतुर्विध संघ अथवा गोष्टीपांचनी श्रुतधर्म
द्वादशांगी चारित्रधर्म पांचमहाव्रत अस्तिकायधर्म धर्मास्तिकायादि १० ॥ दश थविर कहिआ सन्मार्गेस्थिराकुर्वंतितेस्थविरा ते कहेछे ग्राममांथ
विर बुद्धिवंत १ । नगरमां थविर राष्ट्रमां थविर देशमांथविर प्रशास्तारथविर धर्मोपदेशक कुलमांथविर गच्छमांथविर संघमांथविर जातिथवि
र मोटीजाति श्रुतथविर पर्यायथविर २० वरसनीदीक्षानो १० ॥ दशप्रकारे पुत्र कह्या तेकहेछे आत्मज जे पिताना शरीरथी उपजे ते आत्मज

रणकरणेन वशीकृतः पुत्रतया प्रतिपद्यते यथा कुवलयमालाकथाया महेन्द्रसिंहाभिधानो राजसुतः श्रूयते ७ अथवा त्मजएव गुणभेदा द्भिद्यते तत्र विश्व
एत्ति विन्नकः पडितो ऽभयकुमारवत् उरसेत्ति उरसा वर्त्तत्इति ऊरसो बलवान् बाहुबली वशौण्डीरः शूरो वासुदेववत् गर्वितोवा शौण्डीरःशौंडगर्वइति
वचनात् ॥ सवड्ढेत्ति ॥ संवर्द्धितो भोजनदानादिना ऽनाथपुत्रकः ८ ॥ उववाइयत्ति ॥ उपयाचिते देवताराधने भवः औपयाचितको ऽथवा ऽवपातः सेवा
सा प्रयोजन मस्येति आवपातिक.सेवकइति हृदय तथा अते समीपे वस्तु शील मस्ये त्यन्तेवासी धर्मार्थं मन्तेवासी धर्मान्तिवासी शिष्यइत्यर्थो धर्मान्तेवा
सित्वञ्च छद्मस्थस्यैव नकेवलिनो ऽनुत्तरज्ञानादित्वात् कानि कियन्तिच तस्या नुत्तराणी त्याह ॥ दसेत्यादि ॥ नास्त्युत्तरं प्रधानतर येभ्यस्ता न्यनुत्तराणि

जेम भरतने आदित्ययश १ । क्षेत्रज स्त्रीथी थाय तेक्षेत्रज जेम लौकिक दृष्टांत भारतमां लख्योछे जे पांडुराजाये कोइ ऋषीनुं शापहतो जे तूं मैं
थुन करसे तोमरसे तेथी पांडुराजा अपुत्र पुत्रवान् थावानेअर्थे मंत्रथी धर्म १ । वायु २ । इंद्र ३ । अश्विनीकुमार ५ । एनो आराधन कुंती तथा
माद्रीथी कराव्यो तेहोना वीर्यथी युधिष्ठिर ’ भीम ’ अर्जुन ’ नकुल सहदेव ’ एपांच पाण्डवथया पणि तेमा पाडुराजानो अंशनथी पांडुराजाना
क्षेत्र स्त्रीथी थया तेमाटे क्षेत्रजपुत्र कहाया २ । दत्तक अपुत्र माणसने पुत्रवान होवाने अर्थे दीधो ते दत्तक ते लौकिक मनुस्मृत्यादिकमां पणि प्रसि
द्धछे जेम बाहुबलीये अनिल वेगदीधोहतो ३ । विनयित जेहने शिक्षादीये ते लौकिकमे येप्रसिद्ध नथी ४ । उपरस ’ अथवा ’ औरस ’ पुत्रसमान
स्नेह जेहने ऊपरे होय ते उपरस । जेहने स्नेहथी पुत्रसमान हृदयमा राखिये ते औरस लौकिक मन्वादिकोये आत्मज अने औरस एकहीज मा
न्योछे ५ । मौखर जे मीठा वचनथी पोतेज आवी पुत्रसमान आचरे जेहुं तुमारोपुत्रजछु ते मौखर एहने लौकिकमां स्वयमुपागत कहेछे ६ । शौं
डीर शूरवीर शूरवीरने जीतीने पुत्र वणावे पोताने वशकरीने जेम कुवलयमालानी कथामां महेद्रसिंह राजपुत्र शौंडीर पुत्र प्रसिद्धछे ७ । संवर्द्धित
जे अन्न वस्त्रादि देईने अनाथपुत्रने वणो करिये अने पुत्रवत्राखीये ते संवर्द्धितपुत्र एतले पोष्यपुत्र ८ । उपयाचित देवताना आराधवाथी मल्यो अ

तत्र ज्ञानावरणक्षयात् ज्ञान मनुत्तर मेवं दर्शनावरणक्षया द्दर्शनमोहनीयक्षयाद्वा दर्शनं चारित्रमोहनीयक्षया च्चारित्र चारित्रमोहक्षया द्दनन्तवीर्य मनन्त वीर्यत्वाच्च तपः शुक्लध्यानादिरूप वीर्यान्तरायक्षया द्वीर्य मिहच तपः क्षान्तिमुक्त्यार्जवमार्दवलाघवानि चारित्र भेदाएवेति चारित्रमोहनीय क्षया द्देव भवति सामान्यविशेषयोश्च कथ चिद्भेदा द्भेदेनो पात्तानीति केवलीच मनुष्यक्षेत्रएव भवतीति दशस्थानकानुपातिपदार्थं ॥ समयेत्यादिपुक्खरवरदीवड्ढपच्चच्छिमेण द्वेत्रीत्येतदृत ॥ समयक्षेत्रप्रकरणमाह कण्ठ्य चेत नवर ॥ मत्तंगेत्यादि ॥ गाथा मत्तं मद स्तस्या ग कारण मदिरा तद्ददतीति मत्ताङ्गदा श्चः समुच्चये ॥ भिंगत्ति ॥ भृत भरण पूरण तत्रा ङ्गानि कारणानि भृताङ्गानि भाजनानि नहि भरणक्रिया भरणीय भाजन विना भवतीति तत्सम्माद्कलात् वृक्षाअपि भृ

सोमीरे संवद्धे उववाइए धम्मतेवासी । केवलिस्सणं दस अणुत्तरा प० तजहा अणुत्तरेनाणे अणुत्तरेदंसणे अणुत्तरेचरित्ते अणुत्तरेतवे अणुत्तरेवीरिए अणुत्तराखती अणुत्तरामुत्ती अणुत्तरेअज्जवे अणुत्तरेमद्दवे अणुत्तरेलाघवे । समयखित्तेण दस कुराउ प० तजहा पचदेवकुराउ पंचउत्तरकुराउ । तत्थणं दसमहइमहालया महादु

थवा अवपातक सेवकने पुत्रकरी राखे ते उपयाचित अथवा अवपात पुत्र ८ । धर्मातेवासी जेने प्रव्रज्या दीक्षादीये ते धर्मातेवासी १० ॥ एह दस प्रकारना पुत्र कह्या ॥ केवलीने दश उतकृष्टा कह्या ते कहेछे उत्कृष्टज्ञान १ । उत्कृष्टदर्शन २ । उत्कृष्टचारित्र ३ । उत्कृष्टतप ४ । उत्कृष्टवीर्य ५ । उत्कृष्ट क्षाती ६ । उत्कृष्ट मुक्ति निर्लोभता ७ । उत्कृष्टआर्जव ८ । उत्कृष्ट मार्दव कोमलता ९ । उत्कृष्ट लाघव लघुता १० ॥ समय मनुष्यक्षेत्रने विषे दश कुरु कह्या तेकहेछे पाचदेवकुरु पाच उत्तरकुरु ॥ तिहा दश मोटामोटा आलय मोटावृक्ष कहिआ तेकहेछे जंबू सुदर्शन १ । धातकीवृक्ष २ ।

ताङ्गाः प्राकृतत्वा च्च भिंगाउच्यंते त्रुटितानि तूर्याणि तत्कारणत्वा त्तुटिताङ्गा स्यूर्यदायिन उक्तंच मत्तंगेसुयमज्जा सुहपेज्जं १ भायणाणिभिंगेसु २ तुडियंगे

मा प० तजहा । जबूसुदंसणे धायइरुक्खे महाधायइरुक्खे पउमरुक्खे महापउमरुक्खे पंचकूडसामलीउ । त त्थण दसदेवा महिड्ढिया जाव परिवसंति तं० अणाढिए जबूद्दीवाहिवई सुदसणे पियदंसणे पोंडरीए महा पोंडरीए पचगरुला वेणुदेवा । दसहिं ठाणेहिं उगाढं दुस्सम जाणिज्जा तजहा अकालेवरिसइ कालेनवरिस इ असाहूपूइज्जंति साहूनपूइज्जंति गुरूसुजणोमिच्छपडिवन्नो अमणुन्नासद्दा जाव फासा । दसहिं ठाणेहि उगाढ सुसमं जाणिज्जा तजहा अकालेनवरिसइ तचेव विवरीय जाव मणुन्ना फासा । सुसमसुसमाएणं स माए दसविहा रुक्खा उवभोगत्ताए हव्वमागच्छंति तंजहा मत्तंगयायभिंगा तुडियगादीवजोइचित्तंगा चित्त

महाधातकी वृक्ष ३ । पद्मवृक्ष ४ । महापद्मवृक्ष ५ । पाच कूटसामलीवृक्ष १० ॥ तिहा दश देवता महर्द्धिक रहेछे वसेछे ते कहेछे अनाढीय जबू द्वीपनो अधिपती १ । सुदर्शन २ । प्रियदर्शन ३ । पौंडरीक ४ । महापौंडरीक ५ ॥ पाच गरुल वेणुदेवता १० ॥ दशथानके आकरो दुखमाकाल जा णवो तेकहेछे अकालेवरसे काले नवरसे असाधुपूजाये साधुनपूजाये गुरुने मिथ्याभावे पडिवज्या अविनयी अमनोज्ञशब्द यावत् फर्श १० ॥ दशथा नके आकरो सुसमाकाल जाणवो तेकहेछे अकाले नवरसे तेहज बोल विपरीत यावत् मनोज्ञशब्द ॥ सुखमसुखमा समयनेविषे दशप्रकारना वृक्ष उपभोगपणे आवेछे तेकहेछे मातगमदिरादिआपे १ । भृग भाजनआपे २ । त्रुटिताग वाजित्रआपे ३ । दीपाग दीवा ४ । ज्योति ५ । चित्राग मा

सुगसंगत तुडियाईअट्टप्पगाराइ३ ॥ १ ॥ दीवजोइचित्तगत्ति ॥ दूहा गमग्द: प्रत्येक मभिसंबंध्यते तत्रोदीप: प्रकाशकांयखु तत्कारणत्वाद्दीपाङ्गा: ज्योति रग्नि
स्तत्रच सुखमसुखमाया मग्ने रभावात् ज्योति रवयवखु सोम्याकाशमिति भाव स्तत्कारणत्वा ज्ज्योतिरंगा स्तथा चित्रस्या नेकविधस्य विवचाप्राधान्या
माल्यस्य कारणत्वाच्चित्राङ्गा स्तथा चित्रा विविधा मनोज्ञा रसा मधुराद्यो येभ्य स्ते चित्ररसा भोजनाङ्गा इतिभाव उक्तच दीवसिहा ४ जोइसमा म
याय ५ एएकरेंतिउज्जोयं चित्तगेसुरमम्म चित्तरसा ७ भोयणङ्गाए ॥ १ ॥ मणीनां मणिमयाभरणाना कारणत्वा नमणङ्गा आभरणत्तितवोगेहे रुहा तदद्दा
कारो येषान्ते गेहाकारा: ॥ अणियत्ति ॥ वस्त्रदायिन उक्तच मणिगगेसुय ८ भूसण वराइभयणाइंभवणरुक्खेसु आइणेसुय १० धणियं वत्थाइअट्टप्पगा
राइति ॥ १ ॥ काम्ताधिकारादेव कालविशेषभाविकुलकरवतव्यतामाह ॥ जंबूद्दीवेत्यादि ॥ सूत्रद्वय कण्ठ्य नवर ॥ तीयाएत्ति ॥ अतीतायां ॥ उस्सप्पि
णीएत्ति ॥ उत्सर्पिण्यां कुलकरणशीला: कुलकरा विशिष्टबुद्धयो लोकव्यवस्थाकारिण: पुरुषविशेषा: ॥ आगामिस्साएत्ति ॥ आगमिष्यत्यां वर्तमानात्
अवसर्पिणी साच नोक्ता तत्रापि सप्तैव कुलकरा: क्वचि त्पचदशापि द्दृश्यन्तइति पुष्पारार्थंपमस्तरूपमभिहितं प्रागत:चैमाधिकारादेव कल्पा नाम्नित्य

रसामणियंगा गेहागाराअणियणाय ॥ १ ॥ जंबूद्दीवेदीवे भारहेवासे तीताए उस्सप्पिणीए दसकुलगरा हो
त्था तजहा सयजलेसयाऊय अणंतसेणेयअजियसेणेय कक्कसेणेभीमसेणेय महाभीमसेणेयसत्तमे दढरहे दस

ल्यआपे ६ । चित्ररस भलारस आपे ७ । मणयग आभरणादिआपे ८ । गृहनेआकारेहोय अनिआगा वस्त्रदाता १० ॥ १ ॥ जबूद्दीपें भरतक्षेत्रें अतीत
गईउत्सर्पिणीने विषे दश कुलगर थया तेकहेछे शतजल १ । शतायु २ । अनतसेन ३ । अजितसेन ४ । कर्कशेन ५ । भीमसेन ६ । महाभीमसेन ७ ।

दशकमाह ॥ दसेत्यादि ॥ सौधर्मादौना मिन्द्राधिष्ठितत्व मेते ष्विन्द्राणा निवासा दानतारणयोस्तु तदनधिष्ठितत्वं तन्निवासाभावात् स्वामितयात् तावप्यधिष्ठितावेवेति मन्तव्य यावत्करणात् ईसाणे २ सणंकुमारे ३ माहिंदे ४ बंभलोए ५ लंतगे ६ सुक्केत्ति ७ दृश्यमिति यत एवैते इन्द्राधिष्ठिता अतएवै तेषु दशे न्द्राभवन्तोति दर्शयितु माह ॥ एएसुइत्यादि ॥ शक्र सौधर्मेन्द्रः शेषा देवलोकसमाननामान. शेष सुगममिति इन्द्राधिकारादेव तद्विमानान्याह ॥

रहे सत्तरहे । जंबूद्दीवे दीवे भारहेवासे आगमिस्साए उसप्पिणीए दस कुलगरा भविस्संति तंजहा सीमंकरे सीमंधरे खेमंकरे खेमंधरे विमलवाहणे समुत्ती पडिसुए दढधणू सयधणू दसधणू । जंबूद्दीवे दीवे मंदरस्स पव्वयस्स पुरच्छिमेण सीयाए महानईए उभयोकूले दसवक्खारपव्वया प० तंजहा मालवते चित्तकूडे विचित्त कूडे जाव सोमणसे । जंबूमंदरपच्चत्थिमेणं सीओयाए महानईए उभओकूले दसवक्खारपव्वया प० तंजहा विज्जु प्पभे जाव गंधमायणे । एव धायइखंडदीवपुरच्छिमद्धेवि वक्खारा भाणियव्वा जाव पुक्खरवरदीवड्ढपच्चत्थिम

सातमो ॥ १ ॥ दृढरथ ८ । दशरथ ९ । शतरथ १० ॥ जंबूद्वीपे भरतक्षेत्रे आवतीउत्सर्पिणीये दशकुलगर थास्ये ते कहेछे सीमकर १ । सीमधर २ । खेमधर ३ । खेमकर ४ । विमलवाहन ५ । सुमुक्ति ६ । प्रतिश्रुत ७ । दृढधनू ८ । शतधनू ९ । दशधनू १० ॥ जंबूद्वीपे मेरुपर्वते पूर्वदिसे सीतोदामो टीनदीने बेतटे दश वक्षस्कारपर्वत कह्या मालवत १ । चित्रकूट २ । ब्रह्मकूट ३ । यावत् सोमनस ॥ जंबूद्वीपमा पश्चिमे सीतामोटीनदीने तटे बे तटे दश वक्षस्कार पर्वत कह्या तेकहेछे विद्युत्प्रभ १ । यावत् गधमादन १० ॥ एम धातकीखण्डपूर्वार्द्धे पणि वक्षस्कारपर्वत जाणवा ॥ यावत् पुष्कर

एतेइत्यादि ॥ परिगान न्देशान्तरगमन तत्प्रयोजनं येषां तानि पारियानिकानि गमनप्रयोजनानीत्यर्थोयानं शिविकादि तदाकाराणि विमानानि देवा श्रया यानविमानानि नतुशाश्वतानि नगराकाराणीत्यर्थः पुस्तकान्तरे यानशब्दो न दृश्यते पालकइत्यादीनि शक्रादीना क्रमेणा वगन्तव्यानि यावत्करणात् सोमणसे ३ सिरिवच्छे ४ नंदियावत्ते ५ कामकमे ६ पीइगमे ७ मणोरमे ८ इतिद्रष्टव्यमिति आभियोगिका येते देवा विमानीभवतीति एवविधविमान याथिन येन्द्रा प्रतिमादिका तपसो भवन्तीति दशकानुपातिनी प्रतिमा स्वरूपतश्चाह ॥ दसेत्यादि ॥ दशदशमानि दिनानि यस्यां सा दशदशमिका दशदशकनिष्पन्नेत्यर्थो भिक्षूणा प्रतिमा प्रतिज्ञा भिक्षुप्रतिमा ॥ एकेनेत्यादि ॥ दशदशकानि दिनाना शत भवतीति प्रथमे दशदशभिक्षा द्वितीये विंशतिरेवं दशमेशत सर्वमीलने पचशतानि पचाशदधिकानि भवन्तीति ॥ अहासुत्तेत्यादि ॥ अहासुत्त सूत्रानतिक्रमेण यावत्करणात् ॥ अहाअत्थं ॥ अर्थस्य

होवि । दस कप्पा इंदाहिठिया प० तंजहा सोहम्मे जावसहस्सारे पाणए अच्चुए । एएसुण दसकप्पेसु दसइं दा प० तंजहा सक्के ईसाणे जाव अच्चुए । एएसिण दसण्हं इंदाणं दस परियाणिया विमाणा प० तंजहा पालए पुप्फए जाव विमलवरे सव्वओभद्दे । दसदसमियाणं भिक्खुपडिमाणं राइंदियसएणं अद्धछट्ठेहियभि

द्वीपपश्चिमार्द्धपणि ॥ दशदेवलोक इंद्रसहित कह्या तेकहेछे सौधर्म १ । यावत् सहस्रार प्राणत अच्युत १० ॥ ए दश देवलोकनेविषें दश इंद्र कह्या तेकहेछे शक्र १ । ईशान यावत् अच्युत १० ॥ एदशइंद्रने दश परियानविमान ते जावाआववाना कह्या ते कहेछे पालक १ । पुष्पक २ । यावत् वि मलवर २ । सर्वतोभद्र ३ ॥ दशदशमिश्रा भिक्षुप्रतिमा शतरात्रि साढापांचसे भिक्षाये करी जिम सूत्रमां कहीछे तिम आराधवी होय ॥ दशप्रका

देव शरीरक मुपसर्गकारि नवधि शेत स्त्रानिर्गत त मनुदहन् निसर्गानन्तर मुपतापयन् किभूत शरीरकं सहतेजसा वर्त्तमानं तेजोलब्धिमत् भस्म कु र्यादिति अथ सर्कोपस्यापि वीतरागस्य प्रभावा यत्परतेजो न प्रभवति अत्रार्थे दृष्टान्तमाह ॥ जहावा ॥ यथैव गोशालकस्य भगवत' शिष्याभासस्य म

समुच्छति ते फोडा भिज्जति तत्थ पुलासमुच्छति ते पुलाभिज्जति ते पुलाभिन्नासमाणा तामेव सहतेयसा भासकुज्जा एएतिन्नि आलावगा भाणियव्वा ९ केइ तहारूवं समणवा २ अच्चासाएमाणे तेयंनिसिरिज्जा सेयं तत्थ नोकमइ नोपक्कमइ अचिअचिकरेइ करित्ता आयाहिणपयाहिणं करेइ करित्ता २ उढ्ढ वेहासं उप्प यइ २ सेणं तत्तो पडिहए पडिणियत्ते २ तामेव सरीरग अणदहमाणे २ सहतेयसा भासकुज्जा १० जहेव गो

धु माहनने अत्याशातनाकरे अत्याशातनाकीधे परिकोपे तेउपरि तेज कोपे मूके तेउपरि तेज तिहा उपसर्गना करनारने झीले अग्निदग्धवत् फो टक थाय ते फोडा भेदाये फूटे तिहा नाहनी २। फोडली थाय ते फोडली भेदाय फूटे ते फोडली भेदाणीथकी ते अनार्य तेजूलेश्यासहितने पणि तेजे भस्मकरे साधुनुं तेज बलवतळे ए त्रिण आलावा इमज जाणवा ९। कोई तथारूप श्रमणमाहननें अत्याशातना करवाने तेजोलेश्या अनार्य मूके ते तज ते साधुने आक्रमे तयाहीपरिभवनकरे विशेष पराभव करी नसके उचुउत्पती नीचुआव इम करीने प्रदक्षिणाकरे प्रदक्षिणाकरीने २। उचु वली आकाशे उत्पते उत्पतीने ते तेज साधुना शरीरने हणाणूथको पाछु निवर्त्ते ते साधु ना महातमथी निवर्त्तिने ते अनार्यनाज शरीरमां पेसे शरीरने तेहज तेज तेहने भस्मसात् करे १० ॥ जिम गोसालाने मखलीपुत्रने ते तेज बाल्यो ॥ दश अच्छेरा थया ते कहेछे उपसर्ग १।

निर्युक्त्यादे रनतिक्रमेण ॥ अहातच्च ॥ शब्दार्थानतिक्रमेण ॥ अहामग्ग ॥ चायोपशमिकाभावानतिक्रमेण ॥ अहाकप्पं ॥ तदाचारानतिक्रमेण सम्यक्कायेन न मनोरथमात्रेण ॥ फासिया ॥ विशुद्धपरिणामप्रतिपत्त्या ॥ पालिया ॥ सीमा याव त्तत्परिणामाहान्त्या शोधिता निरतिचारतया शोभितावा तत्समाप्ता वुषितानुष्ठानकरणतः ॥ तोरिता ॥ तीरनीता प्रतिज्ञातकालोपर्यप्यनुष्ठानात् कीर्त्तिता नामत इद चेदच कर्त्तव्य मस्यां तत्कृत मयेत्येवमिति आराधिता सर्वपदमीलनात् भवति जायतइति प्रतिमाभ्यासः ससारचगार्थंससारिभि. क्रियतइति ससारिणो जीवा ञ्जीवाधिकारात् सर्वजीवाश्च ॥ दसेत्यादिना ॥ सूत्रत्रयेणाह ॥ तत्र सुगमं नवरं प्रथमः समयो येषा मेकेन्द्रियत्वस्य ते प्रथमसमया स्ते च ते एकेंद्रियाश्चेतिविगृह्य विपरीता स्त्वितर एव द्विचिचतु.पञ्चेन्द्रया वाच्या आहच ॥ एवजावेत्यादि ॥ अणिंदियत्ति ॥ अनिन्द्रिया. सिद्धा अपर्याप्तका उपयोगत. केवलिनश्चेति ससारिपर्यायविशेषप्रतिपादनायैवाह वासेत्यादि ॥ वर्षशत मायु र्यत्र काले मनुष्याणा स वर्षशतायुष्क. काल स्तत्र यः पुरुषः सोप्युपचारात् वर्षशतायुष्को मुख्यवृत्त्याच वर्षशतायुषि पुरु

## एगिंदिया अपढमसमयएगिंदिया एवजाव अपढमसमयपचिंदिया । दसविहा सव्वजीवा प० तंजहा पुढविकाइया जाव वणस्सइकाइया बेइंदिया जाव पचिंदिया अणिंदिया । अहवा दसविहा सव्वजीवा प० तंजहा

रकासएहि अहासुत्ता जाव आराहिया भवइ । दसविहा संसारसमावन्नगा जीवा प० तंजहा पढमसमयए

रें ससारना जीव कह्या तेकहेछे प्रथमसमयनाउपना एकेंद्री अप्रथम बीजा त्रीजा समयना ऊपना एकेंद्री २ । इम यावत् अप्रथमसमयना पचेंद्री ॥ दशप्रकारे सर्वजीव कह्या तेकहेछे पृथवी काइया १ । यावत् वनस्पतिकायना बेंद्री यावत् पचेंद्री अनिंद्री ॥ अथवा दशप्रकारे सर्वजीव कह्या तेक

खल्यभिधानमङ्खपुत्रस्य मंखश्चित्रफलकप्रधानो भिक्षुकविशेषः ॥ तवतेएत्ति ॥ तपोजनितत्वात्तपः क्किन्नत्तेज स्तेजोलेश्येति तत्र किलैकदा भगवान्म
हावीरः श्रावस्त्यां विहरतिस्म गोशालकश्च तत्रच गौतमो गोचरगतो बहुजनशब्द मश्रौषी द्यथा इहश्रावस्त्यां द्वौजिनौ सर्वज्ञौ महावीरो गोशालकश्चेति
श्रुत्वा भगवदंतिक मागम्य गोशालकोत्थानं पृष्टवान् भगवांश्चोवाच यथायं शरवणग्रामे गोबहुलब्राह्मणगोशालायां जातो मङ्खलिनाम्नो मङ्खस्य सुभद्राभि
धानतद्भार्यायाश्च पुत्रः षड्वर्षाणि यावत् छद्मस्थेन मया सार्द्धं विहृतो स्मत्तएव बहुश्रुतीभूतइति नायं जिनो नच सर्वज्ञ इदंच भगवद्वचन मनुश्रुत्य बहुजनो
नगर्यास्त्रिकचतुष्कादिषु परस्पर कथयामास गोशालको मङ्खलिपुत्रो न जिनो न सर्वज्ञ इदंच लोकवचन मनुश्रुत्य गोशालकः कुपित आनन्दाभिधानंच
भगवदंतेवासिनं गोचरगत मपश्य त्तमवादीच्च भोआनन्द एहि तावदेकमौपम्यं निशामय यथा केचन वणिजो ऽर्थार्थिनो विविधपण्यभृतशकटा देशांतरं
गच्छंतो महाटवीप्रविष्टाः पिपासिता स्तत्र जलं गवेषयंत श्चत्वारि वल्मीकशिखराणि शाद्वलवृक्षकच्छस्यांतरमद्राक्षुः क्षिप्रं चैकं विचिक्षिपु स्ततो ऽतिवि
पुल ममलजल मवापु स्तत्पयो यावत्पिपास मापीतवंतः पयः पात्राणिच पयसा परिपूरयामासुः एपायसभाविना वृद्धेन निवार्यमाणा अप्यतिलोभाद्द्वितीय
तृतीयशिखरे विभिंदु स्तयोः क्रमेण सुवर्णंच रत्नानिच समासादयामासुः पुनस्तथैव चतुर्थं भिन्दाना घोरविष मतिकायं सज्जनपुञ्जतेजस मतिचपलजि
ह्वायुगल मगणितकोपप्रसरं महोरगं संघट्टितवंत स्ततो सौ कोपा द्वल्मीकशिखर मारुह्य मार्त्तण्डमण्डल मवलोक्य निर्निमेषया दृष्ट्या समंता दवलो
कय स्तान् भस्मसा च्चकार तन्निवारकवृद्धवणिजकं न्यायदर्शी त्यनुकम्पया वनदेवता स्वस्थानं संजहारेति एवंत्वदीयधर्माचार्य मात्मीयसम्पदपरितुष्ट
मस्मदवर्णवादविधायिनं मह स्वकीयेन तपस्तेजसा द्येव भस्मसा त्करिष्यामो त्वेषप्रचलितो ह त्वंतु तस्येम मर्थं मावेदय भवतंच वृद्धवणिजमिव न्यायवादि
त्वा द्रक्षियामोति श्रुत्वा सावानन्दमुनि र्भीतो भगवदंतिक मुपागत्य तत्सर्वं मावेदयत् भगवता प्यसावभिहित एष आगच्छति गोशालकः स्ततः साधवः

शीघ्र मितो ऽपसरन्तु श्रेरणाश्च तस्मै कश्चिदपि माद‍ादिति गौतमादीना निवेदयेति तथैव कृते गोशालक आगत्य भगवंत मभिसमभिदधे सुष्टु आयुष्म न् काश्यप साधु आयुष्मन् काश्यप मामेव वदसि गोशालको मंखलिपुत्रो यमित्यादि योसौ गोशालक स्तवान्तेवासो सदेवभूयगतः अह त्वन्यएव तच्छरीरक परीषहसहनसमर्थमास्थाय यत्तद्रत्यादिका कलित वस्तू न्नाहयत् तयोरणाप्रवृत्तयो र्हयोः साध्वोः सर्वानुभूतिसुनक्षत्रनाम्नो स्तेजसा तेन दग्धयो भगवता भिहितो गोशालक. कश्चि च्चोरो ग्रामेयकैः प्रारभ्यमाण स्तथाविध दुर्ग मलभमानो ऽङ्गुल्या तृणेन शूकेनवा त्मान मावृत्य मावृतः किम्भवति अनावृतण्वा सौ त्वमप्येव मन्यथा जल्पनेना त्मान माच्छादयन् किमाच्छादितो भवसि सएव त्व गोशालको यो मया बहुश्रुतीकृत स्तदेव मावोच एव भगवतः समभावतया यथावद् ब्रुवाणस्य तप स्तेजो सौ कोपा न्निससर्ज उच्चावचाकाशे शाकाशयामास तत्तेजश्च भगव त्यप्रभव त्त प्रदक्षिणीकृत्य गोशाल कशरीरमेव परितापय दनुप्रविवेश तेनचा दग्धशरीरो सौ दर्शितानेकविधविक्रियः सप्तमरात्रौ कालमकार्षीदिति महावीरस्य भगवतो नम न्निखिलन रनाकिनिकायनायकस्यापि जघन्यतोपि कोटोसख्यभक्तिभरनिर्भरामरषट्पदपटलजुष्टपदपद्मस्यापि विविधर्द्धिलब्धिमद्वरविनेयसहस्रपरिवृतस्यापि स्वप्र भावप्रशमितयोजनशतमध्यगतवैरमारिविड्वरदुर्भिक्षाद्युपद्रवस्या प्यनुत्तरपुण्यसम्भारस्यापि यद्गोशालकेन मनुष्यमात्रेणापि चिरपरिचितेनापि शिष्यक ल्पेना प्युपसर्ग. क्रियते तदाश्चर्य मित्याश्चर्याधिकारादिदमाह ॥ दसेत्यादि ॥ आ। विस्मयत सर्वन्ते अवगम्यन्त इत्याश्चर्या ण्यद्भुतानि द्रहच सकारः कार

सालस्स मंखलिपुत्तस्स तवे तेए। दस अच्छेरगा पन्नत्ता तंजहा उवसग्गगब्भहरणं इत्थीतित्थअभाविया प

श्रीवीरने गर्भापहार २। स्त्रीतीर्थंकरमल्ली ३। अभावितपर्षदा पचखाणकोईये नकीधु ४। कृष्ण अमरकंकाये गया ५। चद्रमासू र्य पोताने विमाने

स्कारादित्वादिति ॥ उवसग्गेत्यादि ॥ गाथाद्वयं उपसृज्यते क्षिप्यते च्याव्यते प्राणी धर्मादेरित्युपसर्गा देवादिकृतोपद्रवा स्तेच भगवतो महावीरस्य छद्मस्थ
काले केवलिकालेच नरामरतिर्यक्कृता अभूवन् इदंच किल नकदाचिद्भूतपूर्वं तीर्थकराहि अनुत्तरपुण्यसंभारतया नोपसर्गभाजन मपितु सकलनरामर
तिरश्चां सत्कारादिस्थान मेवे त्यनन्तकालभाव्यय मर्थो लोके ऽद्भुतभूतइति१ तथा गर्भस्य उदरसत्वस्य हरण मुदरान्तरसंक्रामण गर्भहरण मेतदपि तीर्थक
रापेक्षया ऽभूतपूर्वं स ह्नगवतो महावीरस्य जात पुरन्दरादिष्टेन हरिनैगमेषिदेवेन देवानन्दाभिधानब्राह्मण्युदरात् त्रिशलाभिधानाया राजपत्न्या उद
र संक्रामणा देतद् प्यनन्तकालभावित्वा दाश्चर्यमेवेति २ तथा स्त्री योषि त्तस्या स्तीर्थकरत्वेनो त्पन्नाया स्तीर्थं द्वादशाङ्ग संघोवा स्त्रीतीर्थं हि पुरुषसिंहाः
पुरुषवरगन्धहस्तिन स्त्रिभुवने प्यव्याहतप्रभुभावाः प्रवर्त्तयति इह त्ववसर्प्पिण्यां मिथिलानगरीपतेः कुम्भकमहाराजस्य दुहिता मल्ल्यभिधाना एकोन
विंशतितमतीर्थंकरस्थानोत्पन्ना तीर्थं प्रवर्त्तितवती त्यनन्तकालजातत्वा दस्य भावस्या श्चर्यतेति ३ तथा अभव्या अयोग्या श्चारित्रधर्मस्य पर्षत्तीर्थङ्करसम
वसरणश्रोतृलोकः श्रूयतेहि भगवतो वर्द्धमानस्य जृम्भिकग्रामनगरा द्वहिरुत्पन्नकेवलस्य तदनन्तरमिलितचतुर्विधदेवनिकायविरचितसमवसरणस्य भक्ति
कुतूहलाकृष्टसमायातानेकनरामरविशिष्टतिरश्चा स्वस्वभाषानुसारिणा ऽतिमनोहारिणा महाध्वनिना कल्पपरिपालनयैव धर्मकथा बभूव यतो नकेनापि
तत्रविरतिः प्रतिपन्ना नचैतत्तोर्थंकृतः कस्यापि भूतपूर्वं मितीद माश्चर्यमिति ४ तथा कृष्णस्य नवमवासुदेवस्य अपरकङ्काराजधानी गतिविषया जाते
त्यप्यजातपूर्वत्वा दाश्चर्यं श्रूयतेहि पाण्डवभार्या द्रौपदी धातकीखण्डभरतक्षेत्रापरकङ्काराजधानीनिवासिना पद्मराजेन देवसामर्थ्येना पहृता द्वारकावती
वास्तव्यश्च कृष्णो वासुदेवो नारदा दुपलब्धतद्व्यतिकरः समाराधितसुस्थिताभिधानलवणसमुद्राधिपतिदेवः पञ्चभिः पाण्डवैः सह द्वियोजनलक्षप्रमाणं ज
लधि मतिक्रम्य पद्मराजरणविमर्दन विजित्य द्रौपदी मानीतवान् तत्रच कपिलवासुदेवो मुनिसुव्रतजिनात् कृष्णवासुदेवागमनवार्त्ता मुपलभ्य सबहुमा

ठा० ॥

८९ ॥

नं कृष्णदर्शनार्थ मागतः कृष्णश्च तदा समुद्र मुल्लंघयतिस्म तत स्तेन पांचजन्य' पूरितः कृष्णेनापि तथैव ततः परस्परं शंखशब्दश्रवण मजायतेति ५ त

था भगवतो महावीरस्य वन्दनार्थं मवतरण माकाशा त्समवसरणभूम्या चन्द्रसूर्ययोः शाश्वतविमानोपेतयो र्बभूवेद मप्याश्चर्यमेवेति ६ ६ तथा हरेः पु

रुषविशेषस्य वंशः पुत्रपौत्रादिपरंपरा हरिवंश स्तल्लक्षण यत् कुलं तस्योत्पत्ति कुलं ह्यनेकधा ततो हरिवंशेन विशेष्यते एतद प्याश्चर्यमेवेति श्रूयतेहि भरत

क्षेत्रापेक्षया यत्तृतीयं हरिवर्षाख्य मिथुनकक्षेत्रं ततः केनापि पूर्ववैरिणा व्यंतरसुरेण मिथुनक मेक भरतक्षेत्रे क्षिप्त तत्पुण्यानुभावा द्राज्यं प्राप्तं त

तो हरिवर्षजातहरिनाम्नः पुरुषा द्यो वंश. सतथेति ७ तथा चमरस्य सुरकुमारराजस्यो त्पतन मूर्द्धगमनश्च चमरोत्पात' सोप्याकस्मिकत्वा दाश्चर्यमि

ति श्रूयतेहि चमरचंचाराजधानीनिवासी चमरेन्द्रो भिनवोत्पन्नः सन् ऊर्द्धमवधिना लोकयामास ततः स्वशीर्षोपरि सौधर्मव्यवस्थितशक्र न्ददर्श ततो

मत्सराधातः शक्रतिरस्काराहितमति रिहागत्य भगवंतं महावीरं छद्मस्थावस्थ मेकरात्रि कीं प्रतिमा मापन्नं सुंसुमारनगरोद्यानवर्त्तिनं सबहुमान

प्रणम्य भगव स्त्वत्पादपंकजवन मे शरणं मरिपराजितस्येति विकृत्यनिरचितघोररूपो लक्षयोजनमानशरीरः परिघरत्नप्रहरणं परितो भ्रमयन् गर्ज

न्नास्फोटयन् देवा स्त्रासय न्नुत्पपात सौधर्मावतंसकविमानवेदिकाया पादन्यास कृत्वा शक्र माक्रोशयामास शक्रोपि कोपा ज्ज्वलज्ज्वालमानस्फारस्फुलिंगशत

समाकुलं कुलिशं त प्रतिमुमोच सच भयाद्गतिनिवृत्य भगवत्पादौ शरणं प्रपेदे शक्रो प्यवधिज्ञानावगततद्व्यतिकार स्तीर्थंकराशातनाभया च्छीघ्र मागत्य

॥

॥

रिसा करहस्सअवरकंका उत्तरणचंदसूराण ॥ १ ॥ हरिवंसकुलुप्पत्ती चमरुप्पाओयअट्ठसयसिद्धा अस्संजएसु

ऊतरया ६। हरिवंशकुल उपन्नुं युगलिया नरके गया ७। चमरोत्पात ८। एकसोआठ १०८ एकसमये सिद्धा ऋषभदेव ९। असजतीनी पूजाय ॥

वज्र मुपसजहार बभाणच मुक्तो स्यहो भगवत' प्रसादा न्नान्ति मत्त स्ते भयमिति ८ तथा ष्टाभि रधिक शत मष्टशत अष्टशतच ते सिद्वाय निर्वृता अ ष्टशतसिद्वा इदम प्यनन्तकालजात मित्याश्चर्यमिति ६ तथा असयता असयमवत आरभपरिग्रहप्रमक्ता अब्रह्मचारिण स्तेषु पूजासत्कारो सयतपूजा सर्वदाहि किल सयताएव पूजार्हा अस्याम्त्ववसर्पिण्या विपरीत जातमित्याश्चर्य १० मतएवाह दशाप्येतानि अनन्तेन कालेना नन्तकाला इसवृत्ता न्य स्या मवसर्पिण्यामिति अनन्तरसूत्रे चमरोत्पात उक्त सच रत्नप्रभाया सजातइति रत्नप्रभावक्तव्यतामाह ॥ इमीसेणमित्यादि ॥ येय रज्जुरायामविष्क भाभ्या मशीतिसहस्राधिक योजनशत बाहल्यत उपरि मध्ये ऽधस्ताच्च यस्या खरकाण्डपङ्कबहुलकाण्डजलबहुलकाण्डाभिधाना: क्रमेण षोडशचतुर शीत्यशीतियोजनसहस्रबाहल्या स्त्रिभागा सति ॥ इमीसेत्ति ॥ एतस्या: प्रत्यचासन्नाया. रत्नाना प्रभा यस्या रत्नैर्वा प्रभाति शोभते या सा रत्नप्रभा त स्या पृथिव्या भूमेर्य त्तत्र खरकाण्ड तत्षोडशविधरत्नात्मकत्वा त्षोडशविध तत्र य: प्रथमो भागो रत्नकाण्ड नाम तद्दशयोजनशतानि बाहल्येन सहस्र मेक स्यूनायेयथे एवमन्याऽनि पञ्चदशापि सूत्राणि वाच्यानि नवर प्रथम सामान्यरत्नात्मक शेषाणि तद्विशेषमयानि चतुर्दशाना मतिदेशमाह ॥ एवमि

पूया दसविऽणतेणकालेणं ॥ २॥ इमीसेणं रयणप्पभाए पुढवीए रयणेकण्डे दसजोयणसयाइं बाहल्लेणं पस्मत्ते इमीसेण रयणप्पभाए पुढवीए वइरेकण्डे दसजोयणसयाइ बाहल्लेण पस्मत्ते। एवं वेरुलिए लोहियस्के मसा

इं १०॥ ए दश अनतेकाले ऊपजे १०॥ आ रतनप्रभा पृथिवीने विषे रतनोनाकाण्ड दशत्येयोजन जाडपणे कह्यो ॥ आ रतनप्रभा पृथिवीनेविषे वज्रकाण्ड दससे योजन जाडपणे कहियो ॥ इम वेरुलियकाण्ड १। लोहिताच रतननोकाण्ड २। मसारगल्ल ३। हसगर्भ ४। पुलक ५। सौगंधिक ६।

त्वादि ॥ एवमिति पूर्वाभिलापेनसर्वाणि वाच्यानि ॥ वेरुलिएत्ति ॥ वैडूर्यकाण्ड एवं लोहिताक्षकांड मसारगल्लकांडं हंसगर्भकाण्ड मेव सर्वाणि नवरं रजत रूप्य जातरूप सुवर्ण मेते अपि रत्नेएवेति रत्नप्रभाप्रस्तावा त्तदाधेयद्वीपादिवक्तव्यता सूत्रचतुष्टयेनाह ॥ सव्वेत्यादि ॥ सुगम नवर मुव्वेध ॥ ओं डत्तिभणियहोई ॥ द्वीपाना ॥ ओंडत्तणाभावेवि ॥ अधोदिशि सहस्र यावत् द्वीपप्रदेशो जम्बूद्वीपेतु पश्चिमविदेहे जगतीप्रत्यासत्तौ ॥ ओंडत्तमवि ॥ अवश्यत्ति ॥ महाह्रदा हिमवदादिषु पद्मादयः ॥ सलिलकुंडत्ति ॥ सलिलानां गङ्गादिनदीना कुण्डानि प्रपातकुण्डानि प्रभवकुण्डानिच सलिलकुण्डा नीति ॥ मुहमूलेत्ति ॥ समुद्रप्रदेशे द्वीपसमुद्राधिकारा त्तद्वर्त्तिनक्षत्रसूत्रमाह ॥ कत्तिएत्यादि ॥ इह किल सूर्यस्य चतुरशीत्यधिक मण्डलशत भवति

रगल्ले हंसगब्भे पुलए सोगंधिए जोइरसे अंजणे अंजणपुलए रयए जायरूवे अंके फलिहे रिट्ठे जहा सोल सविधा भाणियव्वा । सव्वेविण दीवसमुद्दा दसजोयणसयाइं उव्वेहेणं पन्नत्ता । सव्वेविणं महद्दहा दसजोय णाइं उव्वेहेण पन्नत्ता । सव्वेविणं सलिलकुंडा दसजोयणाइं उव्वेहेण पन्नत्ता । सीयासीओयाण महानदीउ मुह मूले दसजोयणाइं उव्वेहेण पन्नत्ताउ । कत्तियानक्खत्ते सव्वबाहिराउ मंडलाउ दसमे मंडले चारचरइ । अणु

ज्योतिरस ७ । अंजन ८ । अंजनपुलक ९ । रजत १० । जातरूप ११ । अंक १२ । स्फटिक १३ । रिष्ट १४ । जिम रतनकांड तिम सोलप्र कार ना जाणवा ॥ सर्व द्वीपसमुद्र दशसे योजन उंडपणे कहिआ ॥ सघलाई महाद्रह दशसेयोजन उंडपणे कह्या ॥ सघलाई सलिलकूट दशसेयोजन उंड पणे कहिआ ॥ सीतासीतोदा मोटीनदी मुखमूले दशयोजन उंडपणे कही ॥ कृत्तिकानक्षत्र सर्वमांडलाथी बाहिरले दशमेमांडले आवी चार चरे

चन्द्रस्य पचदश नक्षत्राणा त्वष्टौ मण्डलञ्च मार्ग उच्यते तत्र यथास्व सूर्यादिविमानतुल्यविष्कम्भ तत्र जवूद्वीपस्या शीत्यधिके योजनशते पंचपष्टिः सूर्यस्य मण्डलानि भवन्ति चन्द्रस्य पञ्च नक्षत्राणा द्वे तथा लवणसमुद्र त्रीणि त्रिंशदधिकानि योजनशता न्यवगाह्य एकोनविंशत्यधिक सूर्यस्य मण्डलशत भवति चन्द्रस्य दश नक्षत्राणाच षट् एतेषाञ्च सर्वबाह्य सुमेरोः पचचत्वारिंशतियोजनाना सहस्रेषुच त्रिंशदधिकेषुच त्रिषुशतेषु भवति सर्वाभ्यन्तरञ्च चतुश्चत्वारिंशतिसहस्रेषु अष्टासुच विंशत्यधिकेषु शतेषु भवतीति एवच कृत्तिकानक्षत्र सर्वबाह्यात् ॥ मडलाश्रोत्ति ॥ चन्द्रमडला दशमे चन्द्रस्य मण्डले सर्वाभ्यन्तरा तपष्ठइत्यर्थ ॥ चारचरइत्ति ॥ भ्रमण माचरति अनुराधानक्षत्र सर्वाभ्यन्तरा चन्द्रस्य मण्डला दशमे चन्द्रस्य मडले सर्वबाह्यात्षष्ठइत्यर्थ चारंचरतीति व्याख्यातमेवेति ॥ विद्धिकराइति ॥ एतन्न नक्षयुक्ते चन्द्रमसि मति ज्ञानस्य श्रुतज्ञानस्यो द्देशादि यदाक्रियते तदाज्ञान समृद्धिमुपयाति अविघ्नेना धीयते श्रयते व्याख्यायते धार्यतेचेति भवतिच कालविशेष स्तथाविधकार्येषु कारण क्षयोपशमादिहेतुत्वा त्तस्य यदाह उदयक्खयखओवसमो वसमाजंचकमुणो भणिया दव्वखेत्तकाल भवचभावचसंपप्पत्ति ॥ १ ॥ तद्यथा ॥ मिगसिरगाहा ॥ कण्ठ्या द्वीपसमुद्राधिकारा देव द्वीपचारिजोववक्तव्यता सूत्रद्वयेनाह

**राहा नक्खत्ते सव्वब्भंतराउ मंडलाउ दसमे मंडले चारचरइ। दस नक्खत्ता णाणस्स विद्धिकरा पसत्ता तंजहा मिगसिरअद्दापूसो तिन्नियपुव्वाइमूलमस्सेसा हत्थोचित्तायतहा दसविद्धिकराइंनाणस्स ॥ १ ॥ चउप्पयथल**

ले ॥ अनुराधानक्षत्र सर्वमांहिला मण्डलथी दशमे मण्डले चार चरेछे ॥ दशनक्षत्र ज्ञाननी वृद्धिना करनार कहिया ते कहेछे मृगशिर १ । आर्द्रा २ । पुष्य ३ । त्रणिपूर्वा ६ । मूल ७ । अश्लेषा ८ । हस्त ९ । चित्रा १० । तिम ए दश नक्षत्र ज्ञाननी वृद्धिकरे १ । चतुष्पद थलचर पचेंद्री तीर्यंच योनि

